# श्रीकृष्णलहरीस्तोत्रम् ।

कदा वृन्दारण्ये विपुलयमुनातीरपुलिने
चरन्तं गोविन्दं हलधरसुदामादिसहितम् ।
अहो कृष्णस्वामिन् मधुरमुरलीमोहन विभो
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १ ॥

कदा कालिन्दीयैर्हरिचरणमुद्राङ्कितटैः
स्मरन् गोपीनाथं कमलनयनं सस्मितमुखम् ।
अहो पूर्णानन्दाम्बुजवदन भक्तैकललन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ २ ॥

कदाचित्खेलन्तं व्रजपरिसरे गोपतनयैः
कुतश्चित्संप्राप्तं किमपि भयितं गोपललनम् ।
अये राधे किंवा हरसि रसिके कञ्चुकयुगं
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ३ ॥

कदाचिद्गोपीनां हसितचकितस्निग्धनयनं
स्थितं गोपीवृन्दे नटमिव नटन्तं सुललितम् ।
सुराधीशैः सर्वैः स्तुतपदमिमं श्रीहरिमिति
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ४ ॥

कदाचित्सच्छायाश्रितमभिमहान्तं यदुपतिं
समाधिस्वच्छायां चल इव विलोलैकमकरम् ।
अये भक्तोदाराम्बुजवदन नन्दस्य तनय
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ५ ॥

कदाचित्कालिन्द्यास्तटतरुकदम्बे स्थितममुं
स्मयन्तं साकूतं हृतवसनगोपीसुतपदम् ।

अहो शक्रानन्दाम्बुजवदन गोवर्धनधर
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ६ ॥

कदाचित्कान्तारे विजयसखमिष्टं नृपसुतं
वदन्तं पार्थेति नृपसुत सखे बन्धुरिति च ।
भ्रमन्तं विश्रान्तं श्रितमुरलिमास्यं हरिमहं
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ७ ॥

कदा द्रक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशं
अये विष्णो ! नाथ ! रसिकमुरलीमोहन विभो ।
दयां कर्तुं दीने परमकरुणाब्धे समुचितं
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ८ ॥

इति श्रीकृष्णलहरीस्तोत्रं संपूर्णम् ।

# श्रीकृष्णनामावलीस्तोत्रम् ।

नामचिन्तामणे कृष्ण चैतन्यरसविग्रह ।
पूर्णशुद्ध नित्यमुक्ताभिन्नात्मन् करुणामय ॥ १ ॥

श्रीकृष्ण सच्चिदानन्द पूर्णब्रह्म सनातन ।
गोलोकनाथ गोपेश सर्वेषां मंगलास्पद ॥ २ ॥

श्रीगोविन्द व्रजानन्द गोकुलानन्ददायक ।
मुकुन्द परमानन्द व्रजेन्द्र नन्दनन्दन ॥ ३ ॥

श्रीश्रीवृन्दावनानन्द यशोदानन्दवर्धन ।
राधागोविन्द राधेश राधिकाप्राणवल्लभ ॥ ४ ॥

श्रीराधाहृदयानन्द गोष्ठानन्द प्रियंवद ।
नन्दात्मज चिदानन्द श्रीनन्दकुलभूषण ॥ ५ ॥

श्रीलनन्ददुलालाश्च गोपीनां नयनोत्पल ।
श्रीमतीराधिकाकान्त व्रजेन्द्र व्रजमोहन ॥ ६ ॥

शालग्राम घनश्याम पूर्णानन्द-प्रदायक ।
रामकृष्ण जगदिष्ट गोष्ठलीलाविनोदक ॥ ७ ॥

श्रीगोपीमोहन कृष्ण श्रीराधारमण प्रभो ।
ईश्वरस्त्वं परमः कृष्ण मनोऽभीष्टप्रदायक ।
राधानाथ गोपीनाथ श्रीराधामनोमोहन ॥ ८ ॥

श्रीवंशीवदनानन्द वेणुवाद्य-विशारद ।
श्रीश्रीरासविहारिंश्च आत्माराम जगन्मय ॥ ९ ॥

यशोदा-प्राणमाणिक्य राधिकाकण्ठभूषण ।
श्रीमत् वृन्दावनस्वामिन् किशोर रासनायक ॥१०॥

गोवर्धन-धरानन्द श्रीगोपालचूडामणे ।
हे दीनदयार्द्र नाथ पूतनागतिदायक ॥११॥

गोविन्द बालमुकुन्द नवनीतस्यतस्कर ।
ब्रह्मण्यदेव ब्रह्मात्मन् ब्रह्मदर्प-विघातक ॥१२॥

देवेन्द्र परमानन्द गोविन्द नन्दबालक ।
राधाविनोदिनीस्वामिन् श्रीगोपीजनवल्लभ ॥१३॥

अच्युत कमलाकान्त देवेन्द्रपदवन्दित ।
वामन बलिदर्पघ्न श्रीनृसिंह दयांबुधे ॥१४॥

दामोदर दीनबन्धो श्रीधर परमेश्वर ।
देवकीनन्दन कृष्ण चिन्तामणे जगत्पते ॥१५॥

श्रीमन्नारायण ब्रह्मन् श्रीपते पुरुषोत्तम ।
यादव माधव देव केशव राम राघव ॥१६॥

मथुरेश हृषीकेश द्वारिकेश जनार्दन ।
वासुदेव हयग्रीव चक्रपाणे गदाधर ॥१७॥

सर्वान्तर्यामिन् गोविन्द विश्वाधार जगन्मय ।
नारायण जगन्नाथ श्रीविष्णो श्रीजनार्दन ॥१८॥

श्रीकृष्ण पुण्डरीकाक्ष विश्वंभर जगद्गुरो ।
विदग्धचतुर दक्ष श्रीकृष्ण विश्वमोहन ॥१९॥

सर्वेश्वर जगत्पाल भगवन् हरे ईश्वर ।
मुरारे कृष्ण कंसारिन् हतारिगतिदायक ॥२०॥

करणं कारणं देव त्वमेव शरणं प्रभो ।
दीनबन्धो कृपासिन्धो गतिनाथ गतिप्रद ॥२१॥

पतितपावन नाथ अनादिरादिरीश्वर ।
यद्यहं निर्गुणो हीनः पापिष्ठोऽप्यधमाधमः ।
तथापि जगतां नाथ त्वमेव शरणं प्रभो ॥२२॥

मादृशः पातकिश्रेष्ठो नास्ति कृष्ण भूमण्डले ।
अतः परं प्रपन्नोऽहं प्रसीद दीनवत्सल ॥२३॥

हा कृष्ण करुणासिन्धो दीनबन्धो दयामय ।
त्राहि मां सर्वतो नाथ त्यक्तुं नार्हसि चाश्रितम् ॥२४॥

राधया सहितं नाम जिह्वाग्रे यस्य वर्तते ।
सत्यं सत्यं पुनः सत्यं स याति परमं पदम् ॥२५॥

इति श्रीकृष्णनामावलीस्तोत्रं समाप्तम् ।

# श्रीकृष्णस्तोत्रम् (१) ।

ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे ।
विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः ॥ १ ॥

नमो विज्ञानरूपाय परमानन्दरूपिणे ।
कृष्णाय गोपीनाथाय गोविन्दाय नमो नमः ॥ २ ॥

नमः कमलनेत्राय नमः कमलमालिने ।
नमः कमलनाभाय कमलापतये नमः ॥ ३ ॥

बर्हापीडाभिरामाय रामायाकुण्ठमेधसे ।
रमा–मानस–हंसाय गोविन्दाय नमो नमः ॥ ४ ॥

कंसवंश–विनाशाय केशि–चाणूर–घातिने ।
वृषभध्वज–वन्द्याय पार्थ–सारथये नमः ॥ ५ ॥

वेणुवादन–शीलाय गोपालायाहिमर्दिने ।
कालिन्दी–कुल–लोलाय लोल–कुण्डल–धारिणे ॥ ६ ॥

बल्लवी–नयनाम्भोज–मालिने नृत्यशालिने ।
नमः प्रणतपालाय श्रीकृष्णाय नमो नमः ॥ ७ ॥

नमः पापप्रणाशाय गोवर्धनधराय च ।
पूतना–जीवितान्ताय तृणावर्तासु–हारिणे ॥ ८ ॥

निष्कलाय विमोहाय शुद्धायाशुद्धि–वैरिणे ।
अद्वितीयाय महते श्रीकृष्णाय नमो नमः ॥ ९ ॥

प्रसीद परमानन्द ! प्रसीद परमेश्वर !
आधि–व्याधि–भुजङ्गेन दष्टं मामुद्धर प्रभो ॥१०॥

श्रीकृष्ण रुक्मिणीकान्त गोपीजन–मनोहर।
संसारसागरे मग्नं मामुद्धर जगद्‌गुरो ॥११॥

केशव क्लेशहरण नारायण जनार्दन।
गोविन्द परमानन्द मां समुद्धर माधव ॥१२॥

इति श्रीगोपालतापनीश्रुतिधृतं
श्रीकृष्णस्तोत्रं (१) समाप्तम्।

# श्रीकृष्णस्तोत्रम् (२)।

वन्दे नवघनश्यामं पीतकौशेयवाससम्।
सानन्दं सुन्दरं शुद्धं श्रीकृष्णं प्रकृतेः परम् ॥ १ ॥

राधेशं राधिकाप्राणवल्लभं बल्लवीसुतम्।
राधासेवितपादाब्जं राधावक्षःस्थलस्थितम् ॥ २ ॥

राधानुगं राधिकेष्टं राधापहृतमानसम्।
राधाधारं भवाधारं सर्वाधारं नमामि तम् ॥ ३ ॥

राधाहृत्पद्ममध्ये च वसन्तं संततं शुभम्।
राधासहचरं शश्वद्राधाज्ञापरिपालकम् ॥ ४ ॥

ध्यायन्ते योगिनो योगान् सिद्धाः सिद्धेश्वराश्च यम्।
तं ध्यायेत्सततं शुद्धं भगवन्तं सनातनम् ॥ ५ ॥

सेवन्ते सततं सन्तो ब्रह्मेशशेषसंज्ञकाः।
सेवन्ते निर्गुणं ब्रह्म भगवन्तं सनातनम् ॥ ६ ॥

निर्लिप्तं च निरीहं च परमात्मानमीश्वरम्।
नित्यं सत्यं च परमं भगवन्तं सनातनम् ॥ ७ ॥

यं सृष्टेरादिभूतं च सर्वबीजं परात्परम् ।
योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम् ॥ ८ ॥

बीजं नानावताराणां सर्वकारणकारणम् ।
वेदवेद्यं वेदबीजं वेदकारणकारणम् ॥ ९ ॥

योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम् ।
इत्येवमुक्त्वा गन्धर्वः पपात धरणीतले ॥१०॥

ननाम दण्डवद्भूमौ देवदेवं परात्परम् ।
इति तेन कृतं स्तोत्रं यः पठेत्प्रयतः शुचिः ॥११॥

इहैव जीवन्मुक्तश्च परं याति परां गतिम् ।
हरिभक्ति हरेर्दास्यं गोलोके च निरामयः ॥१२॥

पार्षदप्रवरत्वं च लभते नात्र संशयः ॥१३॥

इति श्रीनारदपञ्चरात्रे–ज्ञानामृतसारे–गन्धर्वोक्तं
श्रीकृष्णस्तोत्रं (२) संपूर्णम् ।

## श्रीगोविन्दस्तोत्रम् ।

चिन्तामणिप्रकरसद्मसुकल्पवृक्ष-
लक्षावृतेषु सुरभीरभिपालयन्तम् ।
लक्ष्मीसहस्रशतसम्भ्रमसेव्यमानं
गोविन्दमादिपुरुषं तमहं भजामि ॥ १ ॥

वेणुं क्वणन्तमरविन्ददलायताक्षं
बर्हावतंसमसिताम्बुदसुन्दराङ्गम् ।
कन्दर्पकोटिकमनीयविशेषशोभं
गोविन्दमादिपुरुषं तमहं भजामि ॥ २ ॥

आलोलचन्द्रक-लसद्वनमाल्यवंशी-
रत्नाङ्गदं प्रणयकेलिकलाविलासम्।
श्यामं त्रिभङ्गललितं नियतप्रकाशं
गोविन्दमादिपुरुषं तमहं भजामि ॥ ३ ॥

अङ्गानि यस्य सकलेन्द्रियवृत्तिमन्ति
पश्यन्ति पान्ति कलयन्ति चिरं जगन्ति।
आनन्दचिन्मयसदुज्ज्वलविग्रहस्य
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४ ॥

अद्वैतमच्युतमनादिमनन्तरूप-
माद्यं पुराणपुरुषं नवयौवनं च।
वेदेषु दुर्लभमदुर्लभमात्मभक्तौ
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५ ॥

पंथास्तु कोटिशतवत्सरसंप्रगम्यो
वायोरथापि मनसो मुनिपुङ्गवानाम्।
सोऽप्यस्ति यत्प्रपदसीम्न्यविचिन्त्यतत्त्वे
गोविन्दमादिपुरुषं तमहं भजामि ॥ ६ ॥

एकोऽप्यसौ रचयितुं जगदण्डकोटिं
यच्छक्तिरस्ति जगदण्डचया यदन्तः।
अण्डान्तरस्थपरमाणुचयान्तरस्थं
गोविन्दमादिपुरुषं तमहं भजामि ॥ ७ ॥

यद्भावभावितधियो मनुजास्तथैव
संप्राप्य रूपमहिमासनयानभूषाः।
सूक्तैर्यमेव निगमप्रथितैः स्तुवन्ति
गोविन्दमादिपुरुषं तमहं भजामि ॥ ८ ॥

आनन्दचिन्मयरसप्रतिभाविताभि-
स्ताभिर्य एव निजरूपतया कलाभिः ।
गोलोक एव निवसत्यखिलात्मभूतो
गोविन्दमादिपुरुषं तमहं भजामि ॥ ९ ॥

प्रेमाञ्जनच्छुरितभक्तिविलोचनेन
सन्तः सदैव हृदयेषु विलोकयन्ति ।
यं श्यामसुन्दरमचिन्त्यगुणस्वरूपं
गोविन्दमादिपुरुषं तमहं भजामि ॥ १० ॥

रामादिमूर्तिषु कलानियमेन तिष्ठन्
नानावतारमकरोद्भुवनेषु किन्तु ।
कृष्णः स्वयं समभवत् परमः पुमान् यो
गोविन्दमादिपुरुषं तमहं भजामि ॥ ११ ॥

यस्य प्रभा प्रभवतो जगदण्डकोटि-
कोटिष्वशेषवसुधादि विभूतिभिन्नम् ।
तद्ब्रह्म निष्कलमनन्तमशेषभूतं
गोविन्दमादिपुरुषं तमहं भजामि ॥ १२ ॥

माया हि यस्य जगदण्डशतानि सूते
त्रैगुण्यतद्विषयवेदवितायमाना ।
सत्त्वावलम्बि-परसत्त्व-विशुद्धसत्त्वं
गोविन्दमादिपुरुषं तमहं भजामि ॥ १३ ॥

आनन्दचिन्मयरसात्मतया मनःसु
यः प्राणिनां प्रतिफलन् स्मरतामुपेत्य ।
लीलायितेन भुवनानि जयत्यजस्रं
गोविन्दमादिपुरुषं तमहं भजामि ॥ १४ ॥

गोलोकनाम्नि निजधाम्नि तले च तस्य
देवी-महेश-हरि-धामसु ते ते।
ते ते प्रभावनिचया विहिताश्च येन
गोविन्दमादिपुरुषं तमहं भजामि ॥ १५ ॥

सृष्टिस्थितिप्रलयसाधनशक्तिरेका
छायेव यस्य भुवनानि बिभर्ति दुर्गा।
इच्छानुरूपमपि यस्य च चेष्टते सा
गोविन्दमादिपुरुषं तमहं भजामि ॥ १६ ॥

क्षीरं यथा दधि विकारविशेषयोगात्
सञ्जायते न हि ततः पृथगस्ति हेतोः।
यः शम्भुतामपि तथा समुपैति कार्यात्
गोविन्दमादिपुरुषं तमहं भजामि ॥ १७ ॥

दीपार्चिरेव हि दशान्तरमभ्युपेत्य
दीपायते विवृतहेतुसमानधर्मा।
यस्तादृगेव हि च विष्णुतया विभाति
गोविन्दमादिपुरुषं तमहं भजामि ॥ १८ ॥

यः कारणार्णवजले भजति स्म योग-
निद्रामनन्तजगदण्डसरोमकूपः।
आधारशक्तिमवलम्ब्य परां स्वमूर्तिं
गोविन्दमादिपुरुषं तमहं भजामि ॥ १९ ॥

यस्यैकनिश्वसितकालमथावलम्ब्य
जीवन्ति लोमविलजा जगदण्डनाथाः।
विष्णुर्महान् स इह यस्य कलाविशेषो
गोविन्दमादिपुरुषं तमहं भजामि ॥ २० ॥

भास्वान् यथाश्मशकलेषु निजेषु तेजः
　　स्वीयं कियत् प्रकटयत्यपि तद्वदत्र।
ब्रह्मा य एष जगदण्डविधानकर्ता
　　गोविन्दमादिपुरुषं तमहं भजामि ॥ २१ ॥

यत्पादपल्लवयुगं विनिधाय कुम्भ-
　　द्वन्द्वे प्रणामसमये स गणाधिराजः।
विघ्नान् विहन्तुमलमस्य जगत्त्रयस्य
　　गोविन्दमादिपुरुषं तमहं भजामि ॥ २२ ॥

अग्निर्मही गगनमम्बु मरुद्दिशश्च
　　कालस्तथात्ममनसीति जगत्त्रयाणि।
यस्माद्भवन्ति विभवन्ति विशन्ति यं च
　　गोविन्दमादिपुरुषं तमहं भजामि ॥ २३ ॥

यच्चक्षुरेष सविता सकलग्रहाणां
　　राजा समस्तसुरमूर्तिरशेषतेजाः ।
यस्याज्ञया भ्रमति सम्भृतकालचक्रो
　　गोविन्दमादिपुरुषं तमहं भजामि ॥ २४ ॥

धर्मोऽथ पापनिचयः श्रुतयस्तपांसि
　　ब्रह्मादिकीटपतगावधयश्च जीवाः ।
यद्दत्तमात्रविभवप्रकटप्रभावा
　　गोविन्दमादिपुरुषं तमहं भजामि ॥ २५ ॥

यस्त्विन्द्रगोपमथवेन्द्रमहो स्वकर्म-
　　बन्धानुरूपफलभाजनमातनोति ।
कर्माणि निर्दहति किन्तु च भक्तिभाजां
　　गोविन्दमादिपुरुषं तमहं भजामि ॥ २६ ॥

यं क्रोधकामसहजप्रणयादिभीति-
वात्सल्यमोहगुरुगौरवसेव्यभावैः ।
सञ्चिन्त्य तस्य सदृशीं तनुमापुरेते
गोविन्दमादिपुरुषं तमहं भजामि ॥ २७ ॥

इति श्रीब्रह्मसंहितायां पञ्चमाध्याये ब्रह्मकृतं
श्रीगोविन्दस्तोत्रं संपूर्णम् ।

# श्रीदशावतारस्तोत्रम् ।

प्रलयपयोधिजले धृतवानसि वेदं
विहितवहित्र–चरित्रमखेदम् ।
केशव धृतमीनशरीर जय जगदीश हरे ॥१॥

क्षितिरिह विपुलतरे तिष्ठति तव पृष्ठे
धरणिधरणकिण–चक्रगरिष्ठे ।
केशव धृतकूर्मशरीर जय जगदीश हरे ॥२॥

वसति दशनशिखरे धरणी तव लग्ना
शशिनि कलङ्ककलेव निमग्ना ।
केशव धृतशूकररूप जय जगदीश हरे ॥३॥

तव करकमलवरे नखमद्भुतशृङ्गं
दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव धृतनरहरिरूप जय जगदीश हरे ॥४॥

छलयसि विक्रमणे बलिमद्भुतवामन
पदनखनीरजनितजनपावन ।
केशव धृतवामनरूप जय जगदीश हरे ॥५॥

क्षत्रियरुधिरमये जगदपगतपापं
स्नपयसि पयसि शमितभवतापम् ।
केशव धृतभृगुपतिरूप जय जगदीश हरे ॥ ६ ॥

वितरसि दिक्षु रणे दिक्पतिकमनीयं
दशमुख-मौलिबलिं रमणीयम् ।
केशव धृतरामशरीर जय जगदीश हरे ॥ ७ ॥

वहसि वपुषि विशदे वसनं जलदाभं
हलहतिभीतिमिलित-यमुनाभम् ।
केशव धृतहलधररूप जय जगदीश हरे ॥ ८ ॥

निन्दसि यज्ञविधेरहह श्रुतिजातं
सदयहृदयदर्शित-पशुघातम् ।
केशव धृतबुद्धशरीर जय जगदीश हरे ॥ ९ ॥

म्लेच्छनिवहनिधने कलयसि करवालं
धूमकेतुमिव किमपि करालम् ।
केशव धृतकल्किशरीर जय जगदीश हरे ॥१०॥

श्रीजयदेवकवेरिदमुदितमुदारं
शृणु सुखदं शुभदं भवसारम् ।
केशव धृतदशविधरूप जय जगदीश हरे ॥११॥

श्रीदशावतारप्रणामः ।

वेदानुद्धरते जगन्ति वहते भुगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥

इति श्रीजयदेवगोस्वामि-विरचितं श्रीदशावतारस्तोत्रं समाप्तम् ।

# श्रीकृष्णप्रेमामृत-रसायनस्तोत्रम् ।

एकदा कृष्णविरहाद्ध्यायन्ती प्रियसंगमम् ।
मनोवाष्पनिरासाय जल्पन्तीदं मुहुर्मुहुः ॥ १ ॥

कृष्णः कृष्णेन्दुरानन्दो गोविन्दो गोकुलोत्सवः ।
गोपालो गोपगोपीशो बल्लवेन्द्रो व्रजेश्वरः ॥ २ ॥

प्रत्यहं नूतनतरस्तरुणानन्दविग्रहः ।
आनन्दैकसुखस्वामी सन्तोषाक्षयकोषभूः ॥ ३ ॥

आभीरिकानवानन्दः परमानन्दकन्दलः ।
वृन्दावनकलानाथो व्रजानन्दनवांकुरः ॥ ४ ॥

नयनानन्दकुसुमो व्रजभाग्यफलोदयः ।
प्रतिक्षणातिसुखदो मोहनो मधुरद्युतिः ॥ ५ ॥

सुधानिर्यासनिचयः सुन्दरः श्यामलाकृतिः ।
नवयौवनसंपन्नःश्यामामृतरसार्णवः ॥ ६ ॥

इन्द्रनीलमणिस्वच्छो दलितांजनचिक्कणः ।
इन्दीवरसुखस्पर्शो नीरदस्निग्धसुन्दरः ॥ ७ ॥

कर्पूरागुरुकस्तूरीकुंकुमाक्तांगधूसरः ।
सुकुंचितकचन्यस्तोल्लसच्चारुशिखण्डकः ॥ ८ ॥

मत्तालिविलसत्पारिजातपुष्पावतंसकः ।
आननेन्दुजितानन्तपूर्णशारदचन्द्रमाः ॥ ९ ॥

श्रीमल्ललाटपाटीरतिलकालकरंजितः ।
लीलोन्नतभ्रूविलासो मदालसविलोचनः ॥ १० ॥

आकर्णरक्तसौन्दर्य-लहरीदृष्टिमन्थरः ।
घूर्णायमाननयनः साचीक्षणविचक्षणः ॥ ११ ॥

अपांगेङ्गितसौभाग्यतरलीकृतचेतनः ।
ईषन्मुद्रितलोलाक्षः सुनासापुटसुन्दरः ॥ १२ ॥

गण्डप्रान्तोल्लसत्स्वर्णमकराकृतिकुण्डलः ।
प्रसन्नानन्दवदनो जगदाह्लादकारकः ॥ १३ ॥

सुस्मेरामृतसौन्दर्यप्रकाशीकृतदिङ्मुखः ।
सिन्दूरारुणसुस्निग्धमाणिक्यदशनच्छदः ॥ १४ ॥

पीयूषाधिकमाध्वीकसूक्तिश्रुतिरसायनः ।
त्रिभंगललितस्तिर्यग्ग्रीवस्त्रैलोक्यमोहनः ॥ १५ ॥

कुंचिताधरसंसक्तकूजद्वेणुविनोदकः ।
कंकणांगदकेयूरमुद्रिकाविलसद्भुजः ॥ १६ ॥

स्वर्णसूत्रसुविन्यस्तकौस्तुभामुक्तकन्धरः ।
मुक्ताहारोल्लसद्वक्षःस्फुरच्छ्रीवत्सलांच्छनः ॥ १७ ॥

आपीनहृदयो नीपमाल्यवान्बन्धुरोदरः ।
संवीतपीतवसनो रशनाविलसत्कटिः ॥ १८ ॥

अन्तरीयपटीबन्धप्रपदान्दोलितांचलः ।
अरविन्दपदद्वन्द्वक्वणत्कारितनूपुरः ॥ १९ ॥

पल्लवारुणमाधुर्यसुकुमारपदांबुजः ।
नखचन्द्रजिताशेषदर्पणेन्दुमणिप्रभः ॥ २० ॥

ध्वजवज्रांकुशांभोजराजच्चरणपल्लवः ।
त्रैलोक्याद्भुतसौन्दर्यपरिपाकमनोहरः ॥ २१ ॥

साक्षात्केलिकलामूर्तिः परिहासरसार्णवः ।
यमुनोपवनश्रेणीविलासी व्रजनागरः ॥ २२ ॥

गोपांगनाजनासक्तो वृन्दारण्यपुरन्दरः ।
आभीरनागरीप्राणनायकः कामशेखरः ॥ २३ ॥

यमुनानाविको गोपीपारावारकृतोद्यमः ।
राधावरोधनरतः कदंबवनमन्दिरः ॥ २४ ॥

व्रजयोषित्सदाहृद्यो गोपीलोचनतारकः ।
जीवनानन्दरसिकः पूर्णानन्दकुतूहलः ॥ २५ ॥

गोपिकाकुचकस्तूरीपंकिलः केलिलालसः ।
अलक्षितकुटीरस्थो राधासर्वस्वलम्पटः ॥ २६ ॥

बल्लवीवदनांभोजमधुपानमधुव्रतः ।
निगूढरसविद्गोपीचित्ताह्लादकलानिधिः ॥ २७ ॥

कालिन्दीपुलिनानन्दी क्रीडाताण्डवपण्डितः ।
आभीरिकाजनानंगरंगभूमिसुधाकरः ॥ २८ ॥

विदग्धगोपवनिताचित्ताकूतविनोदकः ।
नानोपायनपाणिस्थगोपनारीगणावृतः ॥ २९ ॥

वांछाकल्पतरुः कामकलारसशिरोमणिः ।
कन्दर्पकोटिलावण्यः कोटीन्दुललितद्युतिः ॥ ३० ॥

नवीनमधुरस्नेहः प्रेयसीप्रेमसंचयः ।
गोपीमनोरथाक्रान्तो नाट्यलीलाविशारदः ॥ ३१ ॥

जगत्त्रयमनोमोहकरो मन्मथमन्मथः ।
गोपसीमन्तिनीशश्वद्भावापेक्षापरायणः ॥ ३२ ॥

प्रत्यंगरभसावेशप्रमदाप्राणवल्लभः ।
रासोल्लासमदोन्मत्तो राधिकारतिलंपटः ॥ ३३ ॥

हेलालीलापरिश्रान्तः स्वेदांकुरचिताननः ।
गोपिकांकालसः श्रीमान्मलयानिलसेवितः ॥ ३४ ॥

इत्येवं प्राणनाथस्य प्रेमामृतरसायनम् ।
यः पठेच्छ्रावयेद्वापि स प्रेम्णि प्रमिलेद्ध्रुवम् ॥ ३५ ॥

इति श्रीकृष्णप्रेमामृत-रसायनस्तोत्रं संपूर्णम् ।

# श्रीकृष्णस्य आनन्दाख्यंस्तोत्रम् ।

श्रीकृष्णः परमानन्दो गोविन्दो नन्दनन्दनः ।
तमालश्यामलरुचिः शिखण्डकृतशेखरः ॥१॥

पीतकौशेयवसनो मधुरस्मितशोभितः ।
कन्दर्पकोटिलावण्यो वृन्दारण्यमहोत्सवः ॥२॥

वैजयन्तीस्फुरद्वक्षाः कक्षात्तलगुडोत्तमः ।
कुञ्जार्पितरतिगुञ्जापुञ्जमंजुलकण्ठकः ॥३॥

कर्णिकाराढ्यकर्णश्रीधृतस्वर्णाभवर्णकः ।
मुरलीवादनपटुर्बल्लवीकुलवल्लभः ॥४॥

गान्धर्वाप्तिमहापर्वा राधाराधनपेशलः ।
इति श्रीकृष्णचन्द्रस्य नाम विंशातिसंज्ञकम् ॥५॥

आनन्दाख्यं महास्तोत्रं यः पठेच्छ्रणुयाच्च यः ।
स परं सौख्यमासाद्य कृष्णप्रेमसमन्वितः ॥६॥

सर्वलोकप्रियो भूत्वा सद्गुणावलिभूषितः ।
व्रजराजकुमारस्य संनिकर्षमवाप्नुयात् ॥७॥

इति श्रीमद्रूपगोस्वामि-विरचित-स्तवमालायाँ
श्रीकृष्णस्य आनन्दाख्यंस्तोत्रं संपूर्णम् ।

# श्रीकृष्णस्य लीलामृताख्यंस्तोत्रम् ।

राधिकाहृदयोन्मादिवंशीक्वाणमधुच्छटः ।
राधापरिमलोद्गारगरिमाक्षिप्तमानसः ॥१॥

कम्रराधामनोमीनबडिशीकृतविभ्रमः ।
प्रेमगर्वान्धगान्धर्वाकिलकिञ्चितरञ्जितः ॥२॥

ललितावश्यधीराधामानाभासवशीकृतः ।
राधावक्रोक्तिपीयूषमाधुर्यभरलम्पटः ॥३॥

मुखेन्दुचन्द्रिकोद्घूर्णराधिकारागसागरः ।
वृषभानुसुताकण्ठहारिहारहरिन्मणिः ॥४॥

फुल्लराधाकमलिनीमुखाम्बुजमधुव्रतः ।
राधिकाकुचकस्तूरीपत्रस्फुरदुरस्थलः ॥५॥

इति गोकुलभूपालसूनुलीलामनोहरम् ।
यः पठेन्नामदशकं सोऽस्य वल्लभतां व्रजेत् ॥६॥

इति श्रीमद्रूपगोस्वामि–विरचित–स्तवमालायां
श्रीकृष्णस्य लीलामृताख्यंस्तोत्रं संपूर्णम् ।

# श्रीकृष्णनामाष्टोत्तरशतस्तोत्रम् (१) ।

कलहान्तरितावृत्ता काचिद्बल्लवसुन्दरी ।
विरहोत्तापखिन्नाङ्गी सखीं सोत्कण्ठमब्रवीत् ॥ १ ॥

हन्त गौरि स किं गन्ता पन्थानं मम नेत्रयोः ।
श्रीकृष्णः करुणासिन्धुः कृष्णो गोकुलवल्लभः ॥ २ ॥

गोविन्दः परमानन्दो नन्दमन्दिरमङ्गलम् ।
यशोदाखनिमाणिक्यं गोपेन्द्राम्भोधिचन्द्रमाः ॥ ३ ॥

नवाम्भोधरसंरम्भविडम्बिरुचिडम्बरः ।
क्षिप्तहाटकशौटीर्यपट्टपीताम्बरावृतः ॥ ४ ॥

कन्दर्परूपसंदर्पहारिपादनखद्युतिः ।
ध्वजाम्भोरुहदम्भोलियवांकुशलसत्पदः ॥ ५ ॥

पदपञ्जरसिञ्जानमंजुमञ्जीरखञ्जनः ।
मसारसंपुटाकारधारिजानुयुगोज्ज्वलः ॥ ६ ॥

शौण्डस्तम्बेरमोद्दण्डशुण्डारम्योरुसौष्ठवः ।
मणिकिङ्किणिसंकीर्णविशङ्कटकटिस्थलः ॥ ७ ॥

मध्यमाधुर्यविध्वस्तदिव्यसिंहमदोद्धतिः ।
गारुत्मतगिरिग्रावगरिष्ठोरस्तटान्तरः ॥ ८ ॥

कम्बुकण्ठस्थलालम्बिमणिसम्राडलंकृतिः ।
आखण्डलमणिस्तम्भस्पर्धिदोर्दण्डचण्डिमा ॥ ९ ॥

खण्डिताखण्डकोटीन्दुसौन्दर्यमुखमण्डलः ।
लावण्यलहरीसिन्धुः सिन्दूरतुलिताधरः ॥ १० ॥

फुल्लारविन्दसौन्दर्यकन्दलीतुन्दिलेक्षणः ।
गण्डान्तताण्डवक्रीडाहिण्डन्मकरकुण्डलः ॥११॥

नवीनयौवनारम्भजृम्भितोज्ज्वलविग्रहः ।
अपाङ्गतुङ्गितानङ्गकोटिकोदण्डविक्रमः ॥१२॥

सुधानिर्यासमाधुर्यधुरीणोदारभाषितः ।
सान्द्रवृन्दाटवीकुञ्जकन्दरागन्धसिन्धुरः ॥१३॥

धन्यगोवर्धनोत्तुङ्गशृङ्गोत्सङ्गनवाम्बुदः ।
कलिन्दनन्दिनीकेलिकल्याणकलहंसकः ॥१४॥

नन्दीश्वरधृतानन्दो भाण्डीरतटताण्डवी ।
शंखचूडहरः क्रीडागेन्दूकृतगिरीश्वरः ॥१५॥

वारीन्द्राबुर्दगम्भीरः पारीन्द्राबुर्दविक्रमी ।
रोहिणीनन्दनानन्दी श्रीदामोद्दामसौहृदः ॥१६॥

सुबलप्रेमदयितः सुहृदां हृदयंगमः ।
नन्दव्रजजनानन्दसंदीपनमहाव्रती ॥१७॥

शृङ्गिणीसंघसंग्राहिवेणुसंगीतमण्डलः ।
उत्तुङ्गपुङ्गवारब्धसंगरासङ्गकौतुकी ॥१८॥

विस्फुरद्वन्यशृङ्गारः शृङ्गाराभीष्टदैवतम् ।
उदञ्चत्पिच्छविञ्छोलीलाञ्छितोज्ज्वलविग्रहः ॥१९॥

संचरच्चञ्चरीकालिपञ्चवर्णस्रगञ्चितः ।
सुरङ्गरङ्गणस्वर्णयूथीग्रथितमेखलः ॥२०॥

धातुचित्रविचित्राङ्गलावण्यलहरीभरः ।
गुञ्जापुञ्जकृताकल्पः केलितल्पितपल्लवः ॥२१॥

वपुरामोदमाध्वीकवर्धितप्रमदामदः ।
वृन्दावनारविन्दाक्षीवृन्दकन्दर्पदीपनः ॥ २२ ॥

मीनाङ्कसंकुलाभीरीकुचकुंकुमपङ्किलः ।
मुखेन्दुमाधुरीधारारुद्धसाध्वीविलोचनः ॥ २३ ॥

कुमारीपटलुण्ठाकः प्रौढनर्मौक्तिकर्मठः ।
अमन्दमुग्धवैदग्ध्यदिग्धराधासुधाम्बुधिः ॥ २४ ॥

चारुचन्द्रावलीबुद्धिकौमुदीशरदागमः ।
धीरलालित्यलक्ष्मीवान्कन्दर्पानन्दबन्धुरः ॥ २५ ॥

चन्द्रावलीचकोरेन्द्रो राधिकामाधवीमधुः ।
ललिताकेलिललितो विशाखोडुनिशाकरः ॥ २६ ॥

पद्मावदनपद्मालिः शैब्यासेव्यपदाम्बुजः ।
भद्राहृदयनिद्रालुः श्यामलाकामलालसः ॥ २७ ॥

लोकोत्तरचमत्कारलीलामञ्जरिनिष्कुटः ।
प्रेमसंपदयस्कान्तकृतकृष्णायसव्रतः ॥ २८ ॥

मुरलीचौरगौराङ्गीकुचकंचुकलुञ्चनः ।
राधाभिसारसर्वस्वः स्फारनागरतागुरुः ॥ २९ ॥

राधानर्मौक्तिशुश्रूषावीरुन्नीरुद्धविग्रहः ।
कदम्बमञ्जरीहारिराधिकारोधनोद्धुरः ॥ ३० ॥

कुडुङ्गक्रोडसंगूढराधासंगमरङ्गवान् ।
क्रीडोड्डामरधीराधाताटङ्कोत्पलताडितः ॥ ३१ ॥

अनङ्गसंगरोद्दारिक्षुण्णकुंकुमकङ्कटः ।
त्रिभङ्गीलङ्गिमाकारो वेणुसंगमिताधरः ॥ ३२ ॥

वेणुविस्तृतगान्धर्वसारसन्दर्भसौष्ठवः ।
गोपीयूथसहस्रेन्द्रः सान्द्ररासरसोन्मदः ॥ ३३ ॥

स्मरपञ्चशरीकोटिक्षोभकारिदृगञ्चलः ।
चण्डांशुनन्दिनीतीरमण्डलारब्धताण्डवः ॥ ३४ ॥

वृषभानुसुताभृङ्गीकामधुक्कमलाकरः ।
गूढाकूतपरीहासराधिकाजनितस्मितः ॥ ३५ ॥

नारीवेशनिगूढात्मा व्यूढचित्तचमत्कृतिः ।
कर्पूरालम्बिताम्बूलकरम्बितमुखाम्बुजः ॥ ३६ ॥

मानिचन्द्रावलीदूतिक्लृप्तसन्धानकौशलः ।
छद्मघट्टतटीरुद्धराधाभ्रुकुटिघट्टितः ॥ ३७ ॥

दक्षराधासखीहासव्याजोपालम्भलज्जितः ।
मूर्तिमद्बल्लवीप्रेमा क्षेमानन्दरसाकृतिः ॥ ३८ ॥

अभिसारोल्लसद्भद्राकिङ्किणीनिनदोन्मुखः ।
वाससज्जीभवत्पद्माप्रेक्ष्यमाणाग्रपद्धतिः ॥ ३९ ॥

उत्कण्ठितार्तललितावितर्कपदवीं गतः ।
विप्रलब्धविशाखोरुविलापभरवर्धनः ॥ ४० ॥

कलहान्तरिताश्यामामृग्यमाणमुखेक्षणः ।
खण्डितोच्चण्डधीशैब्यारोपोक्तिरसिकान्तरः ॥ ४१ ॥

विश्लेषविक्लवच्चन्द्रावलीसन्देशनन्दितः ।
स्वाधीनभर्तृकोत्फुल्लराधामण्डनपण्डितः ॥ ४२ ॥

चुम्बवेणुग्लहद्यूतजयिराधाधृताञ्चलः ।
राधाप्रेमरसावर्तविभ्रमभ्रमितान्तरः ॥ ४३ ॥

इत्येषोन्मत्तधीः प्रेम्णा शंसन्ती कंसमर्दनम् ।
स्फुरन्तं पुरतः प्रेक्ष्य प्रौढानन्दोत्सवं ययौ ॥ ४४ ॥
प्रेमेन्दुसागराख्येऽस्मिन्नाम्नामष्टोत्तरे शते ।
विगाहयन्तु विबुधाः प्रीत्या रसनमन्दरम् ॥ ४५ ॥

इति श्रीमद्रूपगोस्वामि-विरचित–स्तवमालायां श्रीप्रेमेन्दुसागराख्यं श्रीकृष्णनामाष्टोत्तरशतस्तोत्रं (१) संपूर्णम् ।

# श्रीकृष्णनामाष्टोत्तरशतस्तोत्रम् (२) ।

श्रीकृष्णः कमलानाथो वासुदेवः सनातन ।
वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ १ ॥

श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ।
चतुर्भुजात्तचक्रासिगदाशंखाम्बुजायुधः ॥ २ ॥

देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः ।
यमुनावेगसंहारी बलभद्रप्रियानुजः ॥ ३ ॥

पूतनाजीवितहरः शकटासुरभञ्जनः ।
नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ॥ ४ ॥

नवनीतनवाहारी मुचुकुन्दप्रसादकः ।
षोडशस्त्रीसहस्रेशस्त्रिभङ्गिमधुराकृतिः ॥ ५ ॥

शुकवागमृताब्धीन्दुर्गोविन्दो गोविदां पतिः ।
वत्सपालनसञ्चारी धेनुकासुरभञ्जनः ॥ ६ ॥

तृणीकृततृणावर्तो यमलार्जुनभञ्जनः ।
उत्तालतालभेत्ता च तमालश्यामलाकृतिः ॥ ७ ॥

गोपगोपीश्वरो योगी सूर्यकोटिसमप्रभः ।
इलापतिः परं ज्योतिर्यादवेन्द्रो यदूद्वहः ॥ ८ ॥

वनमाली पीतवासाः पारिजातापहारकः ।
गोवर्धनाचलोद्धर्ता गोपालः सर्वपालकः ॥ ९ ॥

अजो निरञ्जनः कामजनकः कञ्जलोचनः ।
मधुहा मथुरानाथो द्वारकानायको बली ॥ १० ॥

वृन्दावनान्तसञ्चारी तुलसीदामभूषणः ।
स्यमन्तकमणेर्हर्ता नरनारायणात्मकः ॥ ११ ॥

कुब्जाकृष्ज्वङ्गकरणो मायी परमपुरुषः ।
मुष्टिकासुरचाणूरमल्लयुद्धविशारदः ॥ १२ ॥

संसारवैरी कंसारिमुरारिर्नरकान्तकः ।
अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः ॥ १३ ॥

शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकृत् ।
विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ॥ १४ ॥

सत्यवाक् सत्यसङ्कल्प सत्यभामारतो जयी ।
सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ॥ १५ ॥

जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः ।
वृषभासुरविध्वंसी बाणासुरकरान्तकृत् ॥ १६ ॥

युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ।
पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ॥ १७ ॥

कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः ।
दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः ॥ १८ ॥

नारायणः परब्रह्म पन्नगाशनवाहनः ।
जलक्रीडासमासक्तगोपीवस्त्रापहारकः ॥ १९ ॥

पुण्यश्लोकस्तीर्थकरो वेदवेद्यो दयानिधिः ।
सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः ॥ २० ॥

इत्येवं कृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ।
कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा ॥ २१ ॥

स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया पुरा ।
कृष्णनामामृतं नाम परमानन्ददायकम् ॥ २२ ॥

अनुपद्रवदुःखघ्नं परमायुष्यवर्धनम् ।
दानं श्रुतं तपस्तीर्थं यत्कृतं त्विह जन्मनि ॥ २३ ॥

पठतां शृण्वतां चैव कोटिकोटिगुणं भवेत् ।
पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् ॥ २४ ॥

धनावहं दरिद्राणां जयेच्छूनां जयावहम् ।
शिशूनां गोकुलानां च पुष्टिदं पुष्टिवर्धनम् ॥ २५ ॥

वातग्रहज्वरादीनां शमनं शान्तिमुक्तिदम् ।
समस्तकामदं सद्यः कोटिजन्माघनाशनम् ॥ २६ ॥

अन्ते कृष्णस्मरणदं भवतापभयापहम् ।
कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥ २७ ॥

इमं मंत्रं महादेव जपन्नेव दिवानिशम् ।
सर्वग्रहानुग्रहभाक् सर्वप्रियतमो भवेत् ॥ २८ ॥

पुत्रपौत्रैः परिवृतः सर्वसिद्धिसमृद्धिमान् ।
निर्विश्य भोगानन्तेऽपि कृष्णसान्निध्यमाप्नुयात् ॥२९॥

इति श्रीनारदपञ्चरात्रे-ज्ञानामृतसारे-उमामहेश्वरसंवादे-धरणीशेषसंवादे
श्रीकृष्णनामाष्टोत्तरशतस्तोत्रं (२) संपूर्णम् ।

# श्रीगोपालराजस्तोत्रम् ।

वपुरतुल-तमाल-स्फीत-बाहूरुशाखो-
परिधृत-गिरिवर्य-स्वर्णवर्णैक-गुच्छः ।
कटिकृत-परहस्ता-रक्तशाखाप्रह्वद्यः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥ १ ॥

रुचिरदृगभिधाने पङ्कजे फुल्लयन्तं
सुभग-वदनगात्रं चित्रचन्द्रं दधानः ।
विलसदधर-बिम्ब-घ्रायि-नासा-शुकौष्ठः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥ २ ॥

चल-कुटिलतर-भ्रूकामुकान्तदृगन्त-
क्रमण-निशितबाणं शीघ्रयानं दधानः ।
दरयितुमिव राधाधैर्य-पारीन्द्रवर्यं
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥ ३ ॥

असुलभमिह राधावक्त्र-चुम्बं विजान-
न्निव विलसितुमेतच्छाययापि प्रदूरात् ।
मुकुर-युगलमच्छं गण्डदम्भेन बिभ्रत्
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥ ४ ॥

रुचि-निकर-विराजद्दाडिमीपक्वबीज-
प्रकरविजयि-दन्तश्रेणी-सौरभ्यवातैः ।

रचित-युवति-चेतः कीर-जिह्वाति-लौल्यः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥ ५ ॥

वचन-मधु-रसानां पायनैर्गोपरामा-
कुलमुरुधृत-धामाप्युन्मदीकृत्य कामम् ।
अभिमत-रतिरत्नान्याददानस्ततो द्राक्
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥ ॥

कुवलयनिभभा कौंकुमद्रावपुण्ड्
दधदिव घनषण्डे निश्चलञ्चञ्चलाग्रम् ।
रचयितुमिव साध्वी-कीर्ति-मुग्धालि-भीतिं
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥ ७ ॥

श्रवण-मदन-रज्जू सज्जयँल्लज्जि-राधा-
नयन-चल-चकोरौ बन्धुमुक्तः किशोरौ ।
कृत-मकरवतंस-स्निग्धचन्द्रांशुचारः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥ ८ ॥

युवतिकरण-रत्नव्रातमाच्छिद्य नेत्र-
भ्रमण-पटुभटैस्तं न्यस्य हृत्सौधमध्ये ।
गरुडमणिकवाटेनोरसाघुष्य हृष्टः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥ ९ ॥

त्रिवलि-ललित-तुन्दस्यन्दि-नाभीह्रदोद्य-
त्तनुरुहतति-सर्पीमत्र बिभ्राण उग्राम् ।
युवतिपतिभयाखुग्रासनायेव सद्यः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥१०॥

मरकत-कृतरम्भागर्व-सर्वङ्कषोरु-
द्वयमुरुरसधाम प्रेयसीनां दधानः ।

स्फुरदविरल-पुष्टश्रोणिभारातिरम्यः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥११॥

मदन-मणिवराली-संपुट-क्षुल्लजानु-
द्वय-सुललित-जङ्घा-मञ्जु-पादाब्जयुग्मः ।
विविध-वसनभूषा-भूषिताङ्गः सुकण्ठः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥१२॥

कलित-वपुरिव श्रीविट्ठलप्रेमपुञ्जः
परिजन-परिचर्या-धैर्य-पीयूष-पुष्टः ।
द्युतिभरजितमाद्यन्मन्मथोद्यत्-समाजः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥१३॥

विविध-भजन-पुष्पैरिष्टनामानि गृह्णन्
पुलकित-तनुरिह श्रीविट्ठलस्योरुसख्यैः ।
प्रणयमणिसरं स्वं हन्त तस्मै ददानः
प्रतपति गिरिपट्टे सुष्ठु गोपालराजः ॥१४॥

गिरिकुलपति-पट्टोल्लासि-गोपालराज-
स्तुतिविलसित-पद्यान्युद्भटप्रेमदानि ।
नटयति रसनाग्रे श्रद्धया निर्भरं यः
स सपदि लभते तत्प्रेमरत्नं प्रसादम् ॥१५॥

इति श्रीमद्रघुनाथ-दासगोस्वामि-विरचित-स्तवावल्यां
श्रीगोपालराजस्तोत्रं संपूर्णम् ।

# श्रीमदनगोपालस्तोत्रम् ।

वनभुवि रविकन्या-स्वच्छकच्छालिपालि-
ध्वनियुत-वरतीर्थ-द्वादशादित्यकुञ्जे ।
सकनक-मणिवेदी-मध्यमध्याधिरूढः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ १ ॥

सुभग-नवशिखण्ड-भ्राजदुष्णीष-हारा-
ङ्गदवलय-समुद्रा-ध्वान-मञ्जीर-रम्यः ।
वसन-घुसृणचर्चा-मालिकोल्लासिताङ्गः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ २ ॥

कटिकृत-वरभङ्गन्यस्त-जंघान्यजंघः
करयुग-धृतवंशीं न्यस्य-बिम्बाधराग्रे ।
सुमधुरमति-तिर्यग्ग्रीवया वादयंस्तां
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ ३ ॥

विधिकृत-विधुसृष्टिव्यर्थताकारि-वक्त्र-
द्युतिलव-हृत-राधा-स्थूल-मानान्धकारः ।
स्मित-लपित-मधूल्योन्मादितैतद्धृषीकः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ ४ ॥

शरदुदित-सरोजव्रात-वित्रासि-नेत्रा-
ञ्चल-कुटिल कटाक्षैर्मन्दरोद्दण्डचालैः ।
झटिति मथित-राधा-स्वान्त-दुग्धार्णवान्तः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ ५ ॥

कुटिल-चटुल-चिल्लीवल्लि-लास्येन लब्ध-
प्रथित-सकल-साध्वी-धर्मरत्न-प्रसादः ।

तिलकवदलिकेन ध्वस्त-कामेषुचापः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ ६ ॥

शुकयुव-वरचञ्चु-प्रांशुनासांशुसिन्धौ
जनित-कुलवधूटी-दृष्टिमत्स्यीविहारः ।
स्मित-लव-युत-राधाजल्प-मंत्रोन्मदान्तः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ ७ ॥

विकसदधर-बन्धूकान्तरुड्डीय गन्धैः
पतितमुप विधतुँ राधिकाचित्तभृङ्गम् ।
दशन-रुचिगुणाग्रे दत्त-तत्सीधुचारः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ ८ ॥

श्रवण-मदनकन्द-प्रेक्षणोड्डीन-राधा-
धृति-विभव-विहङ्गे न्यस्तनेत्रान्तबाणः ।
अलक-मधुप-दत्त-द्योत-माध्वीक-सत्रः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ ९ ॥

परिमलरुचिपालीशालि-गान्धर्विकोद्य-
न्मुखकमल-मधूली-पानमत्त-द्विरेफः ।
मुकुरजयि-कपोले मृग्यतच्चुम्बबिम्बः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥१०॥

मकरमुख--सद्दक्ष--स्वर्णवर्णावतंस-
प्रचलन--हृत--राधासर्वशारीरधर्मः ।
तदतिचल--दृगन्त--स्वस्थवंशो धृताक्षः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥११॥

हरिमणिकृतशंख--श्लाघितोल्लंघिलेखा-
त्रय--रुचिवृतकण्ठस्योपकण्ठे मणीन्द्रम् ।

दधदिह परिरब्धुं राधिकां बिम्बितां च
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥१२॥

कुवलय--कृत--वक्षस्तल्पमुच्चं दधानः
श्रम--विलुलित--राधा--स्वापनायैव नव्यम् ।
भुजयुगमपि दिव्यं तत्प्रकाण्डोपधानं
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥१३॥

रुचिर--जठरपत्रे चित्रनाभी--तटोद्य--
त्तनुरुहततिनाम्नीं बल्लवीवृन्दभुक्त्यै ।
स्मरनृपति--समुद्र--स्वाक्षरालीं दधानः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥१४॥

युवतिहृदलसेभ–प्रौढबन्धाय काम–
स्थपति–चित–रसोरुस्तम्भजृम्भाभिरामः ।
मरकत–कटजैत्रफुल्लजानुप्रसन्नः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥१५॥

प्रणय–नवमधूनां पानमात्रैकगत्याः
सकल–करणजीव्यं राधिका–मत्तभृंग्याः ।
अरुण–चरण--कञ्जद्वन्द्वमुल्लास्य पश्यन्
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥१६॥

अतुल–विलसदङ्गश्रेणि–विन्यासभंग्या
ग्लपित–मदनकोटिस्फार--सौन्दर्यकीर्तिः ।
बल--लवहतमत्तापार--पारीन्द्र--दर्पः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥१७॥

तरणि--दुहितृकच्छे स्वच्छ--पाथोदधामा
समुदित--नवकामाभीररामावलीनाम् ।

तडिदति--रुचिबाहु--स्फूर्जदंसोऽतिजृम्भन्
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥१८॥

नवतरुणिमभट्टाचार्यवर्येण शास्त्रं
मनसिजमुनिक्लृप्तं न्यायमध्यापिताभिः ।
नवनव--युवतीभिर्बिभ्रदुद्ग्राहमस्मिन्
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥ १९॥

रतिमतिरचयन्त्या राधिका--नर्मकान्त्या
स्थगितवचन--दर्पः स्फारितान्य--प्रसङ्गः ।
खरमति--ललितास्ये किञ्चिदञ्चत्स्मिताक्षः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥२०॥

सविध--रमितराधः साग्रज--स्निग्धरूप--
प्रणय--रुचिर--चन्द्रः कुञ्जखेलावितन्द्रः ।
रचित--जन--चकोर--प्रेमपीयूष--वर्षः
स्फुरति मदनपूर्वः कोऽपि गोपाल एषः ॥२१॥

मदनवलित--गोपालस्य यः स्तोत्रमेतत्
पठति सुमतिरुद्यद्दैन्य--वन्याभिषिक्तः ।
स खलु विषयरागं सौरिभागं विहाय
प्रतिजनि लभते तत्पाद--कञ्जानुरागम् ॥२२॥

इति श्रीमद्रघुनाथ--दासगोस्वामि--विरचित--स्तवावल्यां
श्रीमदनगोपालस्तोत्रं संपूर्णम् ।

# श्रीनन्दनन्दनस्तोत्रम् ।

बालं नवीनशतपत्रविशालनेत्रं
बिंबाधरं सजलमेघरुचिं मनोज्ञम् ।
मन्दस्मितं मधुर सुन्दरमन्दयानं
श्रीनन्दनन्दनमहं मनसा नमामि ॥ १ ॥

मंजीरनूपुररणन्नवरत्नकांची–
श्रीहारकेशरिनखप्रतियंत्रसंघम् ।
दृष्टार्तिहारिमषिबिन्दुविराजमानं
वन्दे कलिन्दतनुजातटबालकेलिम् ॥ २ ॥

पूर्णेन्दुसुन्दरमुखोपरि कुंचिताग्राः
केशा नवीनघननीलनिभाः स्फुरन्तः ।
राजन्त आनतशिरः कुमुदस्य यस्य
नन्दात्मजाय सबलाय नमो नमस्ते ॥ ३ ॥

श्रीनन्दनन्दनस्तोत्रं प्रातरुत्थाय यः पठेत्
तन्नेत्रगोचरं याति सानन्दं नन्दनन्दनः ॥ ४ ॥

इति श्रीगर्गसंहितोक्तं श्रीनन्दनन्दनस्तोत्रं समाप्तम् ।

# श्रीगोपालस्तोत्रम् ।

नवीननीरदश्यामं नीलेन्दीवरलोचनम् ।
बल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम् ॥ १ ॥

स्फुरद्बर्हिदलोद्बद्धनीलकुञ्चितमूर्धजम् ।
कदम्बकुसुमोद्बद्धवनमालाविभूषितम् ॥ २ ॥

गण्डमण्डलसंसर्गिचलत्काञ्चनकुण्डलम् ।
स्थूलमुक्ताफलोदारहारद्योतितवक्षसम् ॥ ३ ॥

हेमाङ्गदतुलाकोटिकिरीटोज्ज्वलविग्रहम् ।
मन्दमारुतसंक्षोभवल्गिताम्बरसञ्चयम् ॥ ४ ॥

रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः ।
लसद्गोपालिकाचेतो मोहयन्तं मुहुर्मुहुः ॥ ५ ॥

बल्लवीवदनाम्भोजमधुपानमधुव्रतम् ।
क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः ॥ ६ ॥

यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परम् ।
विचित्राम्बरभूषाभिर्गोपनारीभिरावृतम् ॥ ७ ॥

प्रभिन्नाञ्जनकालिन्दीजलकेलिकलोत्सुकम् ।
योधयन्तं क्वचिद्गोपान् व्याहरन्तं गवां गणम् ॥८॥

कालिन्दीजलसंसर्गिशीतलानिलसेविते ।
कदम्बपादपच्छाये स्थितं वृन्दावने क्वचित् ॥ ९ ॥

रत्नभूधरसंलग्नरत्नासनपरिग्रहम्
कल्पपादपमध्यस्थहेममण्डपिकागतम् ॥१०॥

वसन्तकुसुमामोदसुरभीकृतदिङ्मुखे ।
गोवर्धनगिरौ रम्ये स्थितं रासरसोत्सुकम् ॥११॥

सव्यहस्ततलन्यस्तगिरिवर्यातपत्रकम् ।
खण्डिताखण्डलोन्मुक्तमुक्तासारघनाघनम् ॥१२॥

वेणुवाद्यमहोल्लासकृतहुङ्कारनिःस्वनैः ।
सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितम् ॥१३॥

कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्तिभिः ।
दण्डपाशोद्यतकरैर्गोपालैरुपशोभितम् ॥१४॥

नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदाङ्गपारगैः ।
प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परम् ॥१५॥

य एवं चिन्तयेद्देवं भक्त्या संस्तौति मानवः ।
त्रिसन्ध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् ॥१६॥

राजवल्लभतामेति भवेत्सर्वजनप्रियः ।
अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् ॥१७॥

इति श्रीनारदपंचरात्रे–ज्ञानामृतसारे
श्रीगोपालस्तोत्रं समाप्तम् ।

# श्रीगोपालशतनामस्तोत्रम् ।

देवदेव महादेव सर्ववांछाप्रपूरक ।
पुरा प्रियं देवदेव कृष्णस्य परमाद्भुतम् ॥ १ ॥

नाम्नां शतं समासेन कथयामीति सूचितम् ।

श्रीभगवानुवाच

शृणु प्राणप्रिये देवि गोपनादतिगोपितम् ॥ २ ॥

मम प्राणस्वरूपं च तव स्नेहात्प्रकाश्यते ।
यस्यैकवारं पठनात्सर्वयज्ञफलं लभेत् ॥ ३ ॥

मोहनस्तंभनाकर्षपठनाज्जायते नृणाम् ।
स मुक्तः सर्वपापेभ्यो यस्य स्मरणमात्रतः ॥ ४ ॥

स्वयमायान्ति तस्यैव निश्चलाः सर्वसंपदः ।
राजानो दासतां यान्ति वह्नयो यान्ति शीतताम् ॥ ५ ॥

जलस्तंभं रिपुस्तंभं शत्रूणां वंचनं तथा
ॐ अस्य श्रीगोपालशतनामस्तोत्रस्य नारद ऋषिः
अनुष्टुप् छन्दः । श्रीगोपालः परमात्मा देवता
श्रीगोपालप्रीत्यर्थे शतनामपाठे विनियोगः ॥

ॐ गोपालो गोपतिर्गोप्ता गोविन्दो गोकुलप्रियः ।
गंभीरो गगनो गोपीप्राणभृत्प्राणधारकः ॥ ६ ॥

पतितानन्दनो नन्दी नन्दीशः कंससूदनः ।
नारायणो नरत्राता नरकार्णवतारकः ॥ ७ ॥

नवनीतप्रियो नेता नवीनघनसुन्दरः ।
नवबालकवात्सल्यो ललितानन्दतत्परः ॥ ८ ॥

पुरुषार्थप्रदः प्रेमप्रवीणः परमाकृतिः ।
करुणः करुणानाथः कैवल्यसुखदायकः ॥ ९ ॥

कदंबकुसुमावेशी कदंबवनमन्दिरः ।
कादंबीविमदामोदघूर्णलोचनपंकजः ॥१०॥

कामी कान्तकलानन्दी कान्तः कामनिधिः कविः ।
कौमोदकी–गदापाणिः कवीन्द्रो गतिमान्हरः ॥११॥

कमलेशः कलानाथः कैवल्यः सुखसागरः ।
केशवः केशिहा केशः कलिकल्मषनाशनः ॥१२॥

कृपालुः करुणासेवी कृपोन्मीलितलोचनः ।
स्वच्छन्दः सुन्दरः सुन्दः सुरवृन्दनिषेवितः ॥१३॥

सर्वज्ञः सर्वदो दाता सर्वपापविनाशनः ।
सर्वाह्लादकरः सर्वः सर्ववेदविदांप्रभुः ॥ १४ ॥

वेदान्तवेद्यो वेदात्मा वेदप्राणकरो विभुः ।
विश्वात्मा विश्वविद्विश्वप्राणदो विश्ववन्दितः ॥ १५ ॥

विश्वेशः शमनस्त्राता विश्वेश्वरः सुखप्रदः ।
विश्वदो विश्वहारी च पूरकः करुणानिधिः ॥ १६ ॥

धनेशो धनदो धन्वी धीरो धीरजनप्रियः ।
धरासुखप्रदो धाता दुर्धरान्तकरो धरः ॥ १७ ॥

रमानाथो रमानन्दो रसज्ञो हृदयास्पदः ।
रसिको रासदो रासी रासानन्दकरो रसः ॥ १८ ॥

राधिकाराधितो राधाप्राणेशः प्रेमसागरः ।
नाम्नां शतं समासेन तव स्नेहात्प्रकाशितम् ॥ १९ ॥

अप्रकाश्यमिमं मंत्रं गोपनीयं प्रयत्नतः ।
यस्यैतस्यैकपठनात्सर्वविद्यानिधिर्भवेत् ॥ २० ॥

पूजयित्वा दयानाथं ततः स्तोत्रमुदीरयेत् ।
पठनाद्देवदेवेशि भोगमुक्तफलं लभेत् ॥ २१ ॥

सर्वपापविनिर्मुक्तः सर्वदेवाधिपो भवेत् ।
जपलक्षेण सिद्धं स्यात्सत्यं सत्यं न संशयः ।
किमुक्तेनैव बहुना विष्णुतुल्यो भवेन्नरः ॥ २२ ॥

इति श्रीहरगौरीसंवादे
श्रीगोपालशतनामस्तोत्रं संपूर्णम् ।

# श्रीकृष्णद्वादशनामस्तोत्रम् ।

श्रीकृष्ण उवाच

किं ते नामसहस्रेण विज्ञातेन तवार्जुन ।
तानि नामानि विज्ञाय नरः पापैः प्रमुच्यते ॥ १ ॥

प्रथमं तु हरिं विद्याद्द्वितीयं केशवं तथा ।
तृतीयं पद्मनाभं च चतुर्थं वामनं स्मरेत् ॥ २ ॥

पंचमं वेदगर्भं तु षष्ठं च मधुसूदनम् ।
सप्तमं वासुदेवं च वाराहं चाष्टमं तथा ॥ ३ ॥

नवमं पुण्डरीकाक्षं दशमं तु जनार्दनम् ।
कृष्णमेकादशं विद्याद्द्वादशं श्रीधरं तथा ॥ ४ ॥

एतद्द्वादश नामानि विष्णुप्रोक्ते विधीयते ।
सायं प्रातः पठेन्नित्यं तस्य पुण्यफलं शृणु ॥ ५ ॥

चान्द्रायणसहस्राणि कन्यादानशतानि च ।
अश्वमेधसहस्राणि फलं प्राप्नोत्यसंशयः ॥ ६ ॥

अमायां पौर्णमास्यां च द्वादश्यां तु विशेषतः ।
प्रातःकाले पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७ ॥

इति श्रीमन्महाभारते-अरण्यपर्वणि
श्रीकृष्णद्वादशनामस्तोत्रं संपूर्णम् ।

# श्रीद्वादशाक्षरवासुदेवस्तोत्रम् ।

ॐ इत्युच्चारतो मोहनिद्रा दूरं पलायते ।
तया ग्रस्तं जगन्नाथ त्राहि मां मधुसूदन ॥ १ ॥

न गतिर्विद्यते नाथ त्वमेव शरणं मम ।
पापपङ्के निमग्नोऽस्मि त्राहि मां मधुसूदन ॥ २ ॥

मोहितोऽज्ञान-तमसा पुत्र-दार-गृहादिषु ।
तृष्णया पीड्यमानोऽस्मि त्राहि मां मधुसूदन ॥ ३ ॥

भक्तिहीनं च दीनं च दुःख-शोकातुरं प्रभो ।
अनाश्रयमनाथं च त्राहि मां मधुसूदन ॥ ४ ॥

गतागतेन श्रान्तोऽस्मि दीर्घ-संसार-वर्त्मसु ।
पुनर्नागन्तुमिच्छामि त्राहि मां मधुसूदन ॥ ५ ॥

बहवो हि मया दृष्टा योनिद्वारः पृथक्पृथक् ।
गर्भवास-महादुःखात् त्राहि मां मधुसूदन ॥ ६ ॥

तेन देव प्रपन्नोऽस्मि त्राणार्थं त्वत्परायणः ।
दुःखार्णव-निमग्नोऽहं त्राहि मां मधुसूदन ॥ ७ ॥

वाचा यच्च प्रतिज्ञातं कर्मणा नोपपादितम् ।
तत्पापाब्धि-निमग्नोऽस्मि त्राहि मां मधुसूदन ॥८॥

सुकृतं न कृतं किञ्चिद्दुष्कृतं च कृतं मया ।
संसारार्णव-मग्नोऽस्मि त्राहि मां मधुसूदन ॥ ९ ॥

देहान्तर-सहस्रेषु प्रापितं भ्रमता मया ।
तिर्यक्त्वं मानुषत्वं च त्राहि मां मधुसूदन ॥ १० ॥

वाचयामि यथोन्मत्तः प्रलपामि तवाग्रतः ।
जरामरण-भीतोऽस्मि त्राहि मां मधुसूदन ॥ ११ ॥

यत्र यत्र च जातोऽस्मि स्त्रीषु वा पुरुषेषु वा ।
देहि तत्राचलां भक्तिं त्राहि मां मधुसूदन ॥ १२ ॥

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
कदापि न निवर्तन्ते द्वादशाक्षर-चिन्तकाः ॥ १३ ॥

सन्ति स्तोत्राणि बहवो वाञ्छितार्थप्रदानि वै ।
द्वादशार्णात् परं नास्ति वासुदेवेन भाषितम् ॥ १४ ॥

द्वादशार्णं महास्तोत्रं सर्व-काम-फल-प्रदम् ।
गर्भवास-निरासाय शुकेन परिभाषितम् ॥ १५ ॥

द्वादशार्णं निराहारो यः पठेत् हरिवासरे ।
स गच्छेद्वैष्णवं धाम यत्र योगेश्वरो हरिः ॥ १६ ॥

इति श्रीशुकदेवगोस्वामि-विरचितं
श्रीद्वादशाक्षरवासुदेवस्तोत्रं संपूर्णम् ।

# श्रीव्रजविहारस्तोत्रम् ।

गायन्तीनां गोपसीमन्तिनीनां, स्फीताकांक्षामक्षिरोलम्बमालाम् ।
निश्वाञ्चल्यामात्मवक्त्रारविन्दे, कुर्वन्नव्याद्देवकीनन्दनो वः ॥ १ ॥

सुपर्ण-स्वर्णाद्रौ रचित-मणि-श्रृङ्गो जलधिजा-
मुखाम्भोजे भृङ्गो निगमविलसत्पञ्जरशुकः ।
त्रिलोकी कस्तुरीतिलक-कमनीयो व्रजवधू-
विहारी श्रीकृष्णो दिशतु भवतां शर्म सततम् ॥ २ ॥

कस्त्वं बाल बलानुजस्त्वमिह किं मन्मन्दिराशङ्कया
बुद्धं तत् नवनीत-कुम्भ-विवरे हस्तं कथं न्यस्यसि ।
कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिताः
बाला वत्सगतिं विवेक्तुमिति संजल्पन् हरिः पातु वः ॥३॥

जीर्णा तरिः सरिदतीवगभीर-नीरा
बाला वयं सकलमित्थमनर्थहेतुः ।
निस्तारबीजमिदमेव कृशोदरीणां
यन्माधवस्त्वमसि सम्प्रति कर्णधारः ॥ ४ ॥

श्रीश्रीकृष्णो जयति जगतां जन्मदाता च पाता
हर्ता चान्ते हरति भजतां यश्च संसार-भीतिम् ।
राधानाथः सजल-जलद-श्यामलः पीतवासा
वृन्दारण्ये विहरति सदा सच्चिदानन्दरूपः ॥ ५ ॥

ज्योतीरूपं परमपुरुषं निर्गुणं नित्यमेकं
नित्यानन्दं निखिलजगतामीश्वरं विश्वबीजम् ।
गोलोकेशं द्विभुज-मुरली-धारिणं राधिकेशं
वन्दे वृन्दारक-हरिहरब्रह्म-वन्द्यांघ्रिपद्मम् ॥ ६ ॥

येषां श्रीमद्यशोदासुत-पद-कमले नास्ति भक्तिर्नराणां
येषामाभीर-कन्या-प्रिय-गुण-कथने नानुरक्ता रसज्ञा ।
येषां श्रीकृष्णलीला-ललितगुण-कथा-सादरौ नैव कर्णौ
धिक्तान्धिक्तान्धिगेतान्कथयति नितरां कीर्तनस्थो मृदङ्गः ॥

केचिद्वदन्ति शमहीनजनो जघन्यः
केचिद्वदन्ति बलहीनजनोः जघन्यः ।
व्यासो वदत्यखिलवेद-विशेष-विज्ञो
नारायण-स्मरण-हीन-जनो जघन्यः ॥ ८ ॥

वृन्दावने वृक्षलता-प्रतानै-, र्वृन्दावनेशस्य विहारहेतोः ।
पुरा विधात्रा रचितान् सुकुञ्जान्, जगाम कृष्णः सह राधया सः॥९

नवीन-मेघोपम-नील-देहः, सुपीत-पट्टाम्बर-युग्मधारी ।
स्मिताननः कुन्तलवान् किरीटी, वंशीधरो मालतिमाल्यधारी ॥१०॥

नवीन-नीलाम्बुद-कान्तिमद्वपुः, सस्मेर-वक्त्राम्बुज-वेणुवादनः ।
अनेक-रत्नाभरणैर्विभूषितः, स सुन्दराङ्गो महसा महोज्ज्वलः ॥११॥

गोपीजनानन्दकरो मुरारि-, र्वृन्दावनेन्द्रो वनमाल्यशोभी ।
वंशी-निनादेन व्रजाङ्गनानां, मनांसि सम्मोहितवान् स कामी ॥ १२

नाशाय बालान् स हि कंसराजः, तां पूतनां मानुषराक्षसीं च ।
संप्रेषयामास यदा तदा तां, मायाशिशुः प्राणसमं शुशोष ॥ १३ ॥

जिघांसया समायान्तीं पूतनां राक्षसीवराम् ।
क्रोडे कृत्वा स्तन्यदात्रीं जघान बालको हरिः ॥१४॥

गोपीगणास्तमिह कामदृशा भजन्ते
यं भक्तिभाज इह केवल-भक्तिभावैः ।
यं योगिनो हृदि धिया परिचिन्तयन्ति
तं केवलं कमललोचनमाश्रयेऽहम् ॥ १५ ॥

कृष्णे कारुण्य-पूर्णे शशधर-वदने पीत-कौषेय-वस्त्रे
रत्नालङ्कारभूषे सजल-जलधर-श्यामले सुन्दराङ्गे ।
वंशीवाद्य-प्रमोदे व्रजजन-युवती-जीवने यादवेन्द्रे
भूयाद्भक्तिर्दृढा मे सकल-सुरवरैः सेव्यमाने मुरारौ ॥१६

वृन्दारण्ये विहरति सदा वासुदेवो दयालु-
गोंरस्त्रीभिः स्मर-शरशतैर्भिन्नहृत्-कामुकीभिः ।
गोपैर्बालैरपि सहचरैः सार्धमानन्दयुक्तै-
र्योऽसौ कृष्णः परमकरुणस्तं सदा चिन्तयेऽहम् ॥१७॥

वृन्दावनस्थान-विहारहेतो, राधासमं कुञ्जगृहप्रवेशम् ।
चकार गोपीजनवल्लभोऽसौ, पायादपायादपि मां मुरारिः ॥ १८ ॥

वने वने कुंजवने मुरारि-, र्भ्रमन् भ्रमन् भ्राजति राधिका च ।
सहैव कुंजे रमते च राधा, पायादपायादिह कृष्ण एकः ॥१९॥

अनन्त विश्वम्भर वासुदेव, समस्तदेवैरपि वन्द्यपाद ।
निरामयत्राणपते मुरारे, हरे हराशेष-महाघ-सङ्घम् ॥ २० ॥

इति श्रीलश्रीधरस्वामि-विरचितं
श्रीव्रजविहारस्तोत्रं संपूर्णम् ।

# श्रीहरिनाममालास्तोत्रम् ।

गोविन्दं गोकुलानन्दं गोपीशं गोपनायकम् ।
गोवर्धनोद्धरं धीरं तं वन्दे गोमतीप्रियम् ॥ १ ॥

नारायणं निराकारं नरवीरं नरोत्तमम् ।
नृसिंहं नागनाथं च तं वन्दे नरकान्तकम् ॥ २ ॥

पीतांबरं पद्मनाभं पद्माक्षं पुरुषोत्तमम् ।
पवित्रं परमानन्दं तं वन्दे परमेश्वरम् ॥ ३ ॥

राघवं रामचन्द्रं च रावणारिं रमापतिम् ।
राजीवलोचनं रामं तं वन्दे रघुनन्दनम् ॥ ४ ॥

वामनं विश्वरूपं च वासुदेवं च विठ्ठलम् ।
विश्वेश्वरं विभुं ध्येयं तं वन्दे वेदवल्लभम् ॥ ५ ॥

दामोदरं दिव्यसिंहं दयालुं दीननायकम् ।
दैत्यारिं देवदेवेशं तं वन्दे देवकीसुतम् ॥ ६ ॥

मुरारिं माधवं मत्स्यं मुकुन्दं मुष्टिमर्दनम् ।
मंजुकेशं महाबाहुं तं वन्दे मधुसूदनम् ॥ ७ ॥

केशवं कमलाकान्तं कामेशं कौस्तुभप्रियम् ।
कौमोदकीधरं कृष्णं तं वन्दे कौरवान्तकम् ॥ ८ ॥

भूधरं भुवनानन्दं भूतेशं भूतनायकम् ।
भावगम्यं भुजंगेशं तं वन्दे भवनाशनम् ॥ ९ ॥

जनार्दनं जगन्नाथं जगज्जाड्यविनाशकम् ।
जामदग्न्यं वरं ज्योतिस्तं वन्दे जलशायिनम् ॥१०॥

चतुर्भुजं चिदानन्दं चाणूरमल्लमर्दनम् ।
चराचरगतं देवं तं वन्दे चक्रधारिणम् ॥११॥

श्रियः करं श्रियो नाथं श्रीधरं श्रीवरप्रदम् ।
श्रीवत्सलधरं सौम्यं तं वन्दे श्रीसुरेश्वरम् ॥१२॥

योगीश्वरं यज्ञपतिं यशोदानन्ददायकम् ।
यमुनाजलकल्लोलं तं वन्दे यदुनायकम् ॥१३॥

शालग्रामशिलारूपं शंखचक्रोपशोभितम् ।
सुरासुरैः सदा सेव्यं तं वन्दे साधुवल्लभम् ॥१४॥

त्रिविक्रमं तपोमूर्तिं त्रिविधाघौघनाशनम् ।
त्रिस्थलं तीर्थराजेन्द्रं तं वन्दे तुलसीप्रियम् ॥१५॥

अनन्तमादिपुरुषमच्युतं च वरप्रदम् ।
आनन्दं च सदानन्दं तं वन्दे चाघनाशनम् ॥१६॥

लीलया धृतभूभारं लोकसत्त्वैकवन्दितम् ।
लोकेश्वरं च श्रीकान्तं तं वन्दे लक्ष्मणप्रियम् ॥१७॥

हरिं च हरिणाक्षं च हरिनाथं हरिप्रियम् ।
हलायुधसहायं च तं वन्दे हनुमत्पतिम् ॥१८॥

हरिनामकृता माला पवित्रा पापनाशिनी ।
बलिराजेन्द्रेण चोक्ता कण्ठे धार्या प्रयत्नतः ॥१९॥

इति श्रीबलिराजेन्द्रोक्तं
श्रीहरिनाममालास्तोत्रं संपूर्णम् ।

# श्रीमुकुन्दमालास्तोत्रम् ।

वन्दे मुकुन्दमरविन्द--दलायताक्षं
कुन्देन्दु–शंख–दशनं शिशुगोप–वेशम ।
इन्द्रादि--देवगण--वन्दित–पादपीठं
वृन्दावनालयमहं वसुदेव--सूनुम ॥ १ ॥

श्रीवल्लभेति वरदेति दयापरेति
भक्तिप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशयनेति जगन्निवासे--
त्यालापनं प्रतिपदं कुरु मे मुकुन्द ॥ २ ॥

जयतु जयतु देवो देवकीनन्दनोऽयं
जयतु जयतु कृष्णो वृष्णिवंश-प्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वी-भार-नाशो मुकुन्दः ॥ ३ ॥

मुकुन्द मूर्ध्ना प्रणिपत्य याचे,भवन्तमेकान्तमियन्तमर्थम् ।
अविस्मृतिस्त्वच्चरणारविन्दे,भवे भवे मेऽस्तु भवत्प्रसादात् ॥४॥

श्रीगोविन्द--पदाम्भोज--मधुनो महदद्भुतम् ।
यत्पायिनो न मुह्यन्ति मुह्यन्ति यदपायिनः ॥ ५ ॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम् ।
रम्यारामामृदुतनुलता नन्दने नापि रन्तुं
भावे भावे हृदयभवने भावयेयं भवन्तम् ॥ ६ ॥

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद्भाव्यं तद्भवतु भगवन् ! पूर्वकर्मानुरूपम् ।
एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि
त्वत्पादाम्भोरुह-युगगता निश्चला भक्तिरस्तु ॥ ७ ॥

दिवि वा भुवि वा ममास्तु वासो,नरके वा नरकान्तक प्रकामम् ।
अवधीरित-शारदारविन्दौ, चरणौ ते मरणेऽपि चिन्तयामि ॥८॥

सरसिजनयने सशंखचक्रे, मुरिभिदि मा विरमस्व चित्त रन्तुम् ।
सुखतरमपरं न जातु जाने, हरिचरणस्मरणामृतेन तुल्यम् ॥९॥

चिन्तयामि हरिमेव संततं, मन्दहास--मुदिताननाम्बुजम् ।
नन्दगोप-तनयं परात्परं, नारदादि--मुनिवृन्द--वन्दितम् ॥१०॥

करचरण--सरोजे कान्तिमन्नेत्रमीने
श्रममुषि भुजवीचि--व्याकुलेऽगाधमार्गे ।
हरि--सरसि विगाह्यापीय तेजोजलौघं
भव--मरु--परिखिन्नः क्लेशमद्य त्यजामि ॥११॥

हे लोकाः ! शृणुत प्रसूति-मरण-व्याधेश्चिकित्सामिमां
योगज्ञाः समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः ।
अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां
तत्पीतं परमौषधं वितनुते निर्वाणमात्यन्तिकम् ॥१२॥

हे मर्त्याः ! परमं हितं शृणुत वो वक्ष्यामि संक्षेपतः
संसारार्णवमापदूर्मि--बहुलं सम्यक् प्रविश्य स्थिताः ।
नानाज्ञानमपास्य चेतसि नमो नारायणायेत्यमुं
मंत्रं सप्रणवं प्रणाम--सहितं प्रावर्तयध्वं मुहुः ॥१३॥

माभीर्मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातना
नैवामी प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदन--करो दासस्य किं न क्षमः ॥१४॥

भव--जलधिगतानां द्वन्द्ववाताहतानां
सुतदुहितृकलत्र--त्राणभारार्दितानाम् ।
विषम--विषय--तोये मज्जतामप्लवानां
भवति शरणमेको विष्णुपोतो नराणाम् ॥१५॥

रजसि निपतितानां मोहजालावृतानां
जनन--मरण--दोलादुर्ग--संसर्गगानाम् ।
शरणमशरणानामेक एवातुराणां
कुशल--पथ--नियुक्तश्चक्रपाणिर्नराणाम् ॥१६॥

अपराध-सहस्र-संकुलं पतितं भीम-भवार्णवोदरे ।
अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥१७॥

मा मे स्त्रीत्वं मा च मे स्यात् कुभावो
मा मूर्खत्वं मा कुदेशेषु जन्म ।
मिथ्यादृष्टिर्मा च मे स्यात् कदाचित्
जातौ जातौ विष्णुभक्तो भवेयम् ॥१८॥

कायेन वाचा मनसेन्द्रियैर्वा, बुद्ध्यात्मना वानुसृतिस्वभावात् ।
करोमि यद्यत् सकलं परस्मै, नारायणायैव समर्पयामि ॥१९॥

यत् कृतं यत् करिष्यामि तत् सर्वं न मया कृतम् ।
त्वया कृतं तु फलभुक् त्वमेव मधुसूदन ॥२०॥

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मास्म गाः कातरत्वम् ।
सरसिज-दृशि देवे तारकी भक्तिरेका
नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥२१॥

तृष्णातोये मदन-पवनोद्धूत-मोहोर्मि-माले
दारावर्ते तनय-सहज-ग्राह-संघाकुले च ।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्
पादाम्भोजे वरद भवतो भक्तिभावं प्रयच्छ ॥२२॥

पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिङ्गो लघु-
स्तेजो निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः ।
क्षुद्रा रुद्र-पितामह-प्रभृतयः कीटाः समस्ताः सुरा
दृष्टे यत्र स तारको विजयते श्रीपाद-धूलीकणः ॥२३॥

नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति ।
यं कञ्चित् पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥२४॥

बद्धेनाञ्जलिना नतेन शिरसा गात्रैः सरोमोद्गमैः
कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना ।
नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिना-
मस्माकं सरसीरुहाक्ष सततं सम्पद्यतां जीवितम्॥२५॥

यत्कृष्णप्रणिपात-धूलिधवलं तद्वर्ष्म तद्वै शिर-
स्ते नेत्रे तमसोज्झिते सुरुचिरे याभ्यां हरिर्दृश्यते ।
सा बुद्धिर्विमलेन्दुशंखधवला या माधवध्यायिनी
सा जिह्वाऽमृतवर्षिणी प्रतिपदं या स्तौति नारायणम् ॥२६॥

जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं
पाणिद्वन्द्व समर्चयाच्युतकथाः श्रोत्रद्वय त्वं शृणु ।
कृष्णं लोकय लोचनद्वय हरेर्गच्छांघ्रियुग्मालयं
जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन्नमाधोक्षजम् ॥२७॥

आम्नायाभ्यसनान्यरण्यरुदितं वेदव्रतान्यन्वहं
मेदश्छेदफलानि पूर्तविधयः सर्वं हुतं भस्मनि ।
तीर्थानामवगाहनानि च गजस्नानं विना यत्पद-
द्वन्द्वाम्भोरुह-संस्मृतिं विजयते देवः स नारायणः ॥२८॥

मदन परिहर स्थितिं मदीये, मनसि मुकुन्दपदारविन्दधाम्नि ।
हरनयनकृशानुना कृशोऽसि, स्मरसि न चक्रपराक्रमं मुरारेः ॥२९॥

नाथे धातरि भोगि-भोगशयने नारायणे माधवे
देवे देवकिनन्दने सुरवरे चक्रायुधे शार्ङ्गिणि ।

लीलाशेषजगत्प्रपञ्चजठरे विश्वेश्वरे श्रीधरे
गोविन्दे कुरु चित्तवृत्तिमचलामन्यैस्तु किं वर्तनैः ॥३०॥

मा द्राक्षं क्षीणपुण्यान् क्षणमपि भवतो भक्तिहीनान् पदाब्जे
मा श्रौषं श्राव्यबन्धं तव चरितमपास्यान्यदाख्यानजातम् ।
मा स्मार्षं माधव त्वामपि भुवनपते चेतसाऽपह्नुवानान्
मा भूवं त्वत्सपर्या-व्यतिकररहितो जन्मजन्मान्तरेऽपि ॥३१॥

मज्जन्मनः फलमिदं मधुकैटभारे
मत्प्रार्थनीय-मदनुग्रह एष एव ।
त्वद्भृत्यभृत्य-परिचारक-भृत्यभृत्य-
भृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥३२॥

तत्त्वं ब्रुवाणानि परं परस्ता, न्मधुक्षरन्तीव मुदावहानि ।
प्रावर्तय प्राञ्जलिरस्मि जिह्वे, नामानि नारायण-गोचराणि ॥३३॥

नमामि नारायण-पादपङ्कजं,करोमि नारायण-पूजनं सदा ।
वदामि नारायणनाम निर्मलं,स्मरामि नारायणतत्त्वमव्ययम्॥३४॥

श्रीनाथ नारायण वासुदेव, श्रीकृष्ण भक्तप्रिय चक्रपाणे ।
श्रीपद्मनाभाच्युत कैटभारे, श्रीराम पद्माक्ष हरे मुरारे ॥३५॥

अनन्त वैकुण्ठ मुकुन्द कृष्ण, गोविन्द दामोदर माधवेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चि,दहो जनानां व्यसनाभिमुख्यम् ॥

भक्तापाय-भुजङ्गगारुडमणिस्त्रैलोक्य-रक्षामणि-
र्गोपीलोचन-चातकाम्बुदमणिः सौन्दर्यमुद्रामणिः ।
यः कान्तामणि-रुक्मिणी-घनकुचद्वन्द्वैकभूषामणिः
श्रेयो देवशिखामणिर्दिशतु नो गोपालचूडामणिः ॥३७॥

शत्रुच्छेदैकमंत्रं सकलमुपनिषद् वाक्यसम्पूज्य-मंत्रं
संसारोच्छेदमंत्रं समुचित-तमसः संघनिर्याणमंत्रम् ।
सर्वैश्वर्यैकमंत्रं व्यसनभुजग-संदष्ट-संत्राणमंत्रं
जिह्वे श्रीकृष्णमंत्रं जप जप सततं जन्मसाफल्यमंत्रम् ॥३८॥

व्यामोहप्रशमौषधं मुनिमनोवृत्ति-प्रवृत्त्यौषधं
दैत्येन्द्रार्तिकरौषधं त्रिभुवने सञ्जीवनैकौषधम् ।
भक्तात्यन्तहितौषधं भवभयप्रध्वंसनैकौषधं
श्रेयः प्राप्तिकरौषधं पिब मनः श्रीकृष्णदिव्यौषधम् ॥३९॥

कृष्ण ! त्वदीय-पदपङ्कज-पञ्जरान्त-
मद्यैव मे विशतु मानसराजहंसः ।
प्राणप्रयाणसमये कफवातपित्तैः
कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥४०॥

चेतश्चिन्तय कीर्तयस्व रसने नम्रीभव त्वं शिरो
हस्तावञ्जलिसम्पुटं रचयतं वन्दस्व दीर्घं वपुः ।
आत्मन् संश्रय पुण्डरीकनयनं नागाचलेन्द्रस्थितं
धन्यं पुण्यतमं तदेव परमं दैवं हि सत्सिद्धये ॥४१॥

शृण्वन् जनार्दनकथागुणकीर्तनानि
देहे न यस्य पुलकोद्गमरोमराजिः ।
नोत्पद्यते नयनयोर्विमलाम्बुमाला
धिक् तस्य जीवितमहो पुरुषाधमस्य ॥४२॥

अन्धस्य मे हृतविवेकमहाधनस्य
चौरैः प्रभो बलिभिरिन्द्रियनामधेयैः ।

मोहान्धकूपकुहरे विनिपातितस्य
देवेश देहि कृपणस्य करावलम्बम् ॥४३॥

इदं शरीरं परिणामपेशलं, पतत्यवश्यं शतसन्धि-जर्जरम् ।
किमौषधं पृच्छसि मूढ दुर्मते, निरामयं कृष्णरसायनं पिब ॥४४

आश्चर्यमेतत् हि मनुष्यलोके, सुधां परित्यज्य विषं पिबन्ति ।
नामानि नारायणगोचराणि, त्यक्तान्यवाचः कुहकाः पठन्ति ॥४५

त्यजन्तु बान्धवाः सर्वे, निन्दन्तु गुरवो जनाः ।
तथापि परमानन्दो, गोविन्दो मम जीवनम् ॥४६॥

सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्वबाहु-
र्यो यो मुकुन्द नरसिंह जनार्दनेति
जीवो जपत्यनुदिनं मरणे रणे वा
पाषाणकाष्ठसदृशाय ददात्यभीष्टम् ॥४७॥

नारायणाय नम इत्यमुमेव मंत्रं
संसार-घोरविषनिर्हरणाय नित्यम् ।
शृण्वन्तु भव्यमतयो यतयोऽनुरागा-
दुच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः ॥४८॥

चित्तं नैव निवर्तते क्षणमपि श्रीकृष्णपादाम्बुजात्
निन्दन्तु प्रियबान्धवा गुरुजना गृह्णन्तु मुञ्चन्तु वा ।
दुर्वादं परिघोषयन्तु मनुजा वंशे कलङ्कोऽस्तु वा
तादृक्प्रेमधरानुरागमधुना मत्ताय मानं तु मे ॥४९॥

कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्णं नमध्वं सदा
कृष्णेनाखिलशत्रवो विनिहताः कृष्णाय तस्मै नमः ।
कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहं
कृष्णे तिष्ठति विश्वमेतदखिलं हे कृष्ण रक्षस्व माम् ॥५०॥

हे गोपालक ! हे कृपाजलनिधे ! हे सिन्धुकन्यापते !
हे कंसान्तक ! हे गजेन्द्रकरुणापारीण ! हे माधव ।
हे रामानुज ! हे जगत्त्रयगुरो ! हे पुण्डरीकाक्ष ! मां
हे गोपीजननाथ ! पालय परं जानामि न त्वां विना ॥५१॥

दारावाराकरवरसुता ते तनूजो विरिञ्चिः
स्तोता वेदस्तव सुरगणा भृत्यवर्गः प्रसादः ।
मुक्तिर्माया जगदविकलं तावकी देवकी ते
माता मित्रं बलरिपुसुतस्तत् त्वदन्यं न जाने ॥५२॥

प्रणाममीशस्य शिरःफलं विदु-,स्तदर्चनं पाणिफलं दिवौकसः ।
मनःफलं तद्गुणतत्त्वचिन्तनं, वाचःफलं तद्गुणकीर्तनं बुधाः ॥५३॥

श्रीमन्नाम प्रोच्य नारायणाख्यं, के न प्रापुर्वाञ्छितं पापिनोऽपि ।
हा नः पूर्वं वाक्प्रवृत्ता न तस्मिं-,स्तेन प्राप्तं गर्भवासादिदुःखम् ॥

ध्यायन्ति ये विष्णुमनन्तमव्ययं, हृत्पद्ममध्ये सततं व्यवस्थितम् ।
समाहितानां सतताभयप्रदं, ते यान्ति सिद्धिं परमां तु वैष्णवीम् ॥

तत् त्वं प्रसीद भगवन् ! कुरु मय्यनाथे
विष्णो ! कृपां परमकारुणिकः खलु त्वम् ।
संसारसागर-निमग्नमनन्त ! दीन-
मुद्धर्तुमर्हसि हरे ! पुरुषोत्तमोऽसि ॥५६॥

क्षीरसागर-तरङ्ग-शीकरा-, सारतारकित-चारुमूर्तये ।
भोगिभोग-शयनीयशायिने, माधवाय मधुविद्विषे नमः ॥५७॥

अलमलमलमेका प्राणिनां पातकानां
निरसन-विषये या कृष्ण कृष्णेति वाणी ।

यदि भवति मुकुन्दे भक्तिरानन्दसान्द्रा
करतलकलिता सा मोक्षसाम्राज्यलक्ष्मीः ॥५८॥

यस्य प्रियौ श्रुतिधरौ कविलोकवीरौ
मित्रौ द्विजन्मवरपद्मशरावभूताम् ।
तेनाम्बुजाक्षचरणाम्बुज–षट्पदेन
राज्ञा कृता कृतिरियं कुलशेखरेण ॥५९॥

मुकुन्दमालां पठतां नराणा-,मशेषसौख्यं लभते न कः स्वित् ।
समस्तपापक्षयमेत्य देही, प्रयाति विष्णोः परमं पदं तत् ॥६०॥

इति श्रीकुलशेखरेणराज्ञा–विरचितं
श्रीमुकुन्दमालास्तोत्रं संपूर्णम् ।

# श्रीप्रपन्नगीतास्तोत्रम् ।

पाण्डव उवाच

प्रह्लाद-नारद-पराशर-पुण्डरीक-
व्यासाम्बरीष-शुक-शौनक-भीष्म-दाल्भ्यान् ।
रुक्माङ्गदार्जुन-वशिष्ठ-विभीषणादीन्
पुण्यानिमान परम-भागवतान् स्मरामि ॥ १ ॥

लोमहर्षण उवाच

धर्मो विवर्धति युधिष्ठिर-कीर्तनेन
पापं प्रणश्यति वृकोदर-कीर्तनेन ।
शत्रुर्विनश्यति धनञ्जय-कीर्तनेन
माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥ २ ॥

ब्रह्मोवाच

ये मानवा विगत-रागपरावरज्ञा
नारायणं सुरगुरुं सततं स्मरन्ति ।
ध्यानेन तेन हत-किल्विष-वेदनास्ते
मातुः पयोधर-रसं न पुनः पिबन्ति ॥ ३ ॥

इन्द्र उवाच

नारायणो नाम नरो नराणां, प्रसिद्धचौरः कथितः पृथिव्याम् ।
अनेक-जन्मार्जित-पापसञ्चयं, हरत्यशेषं स्मरतां सदैव ॥४॥

युधिष्ठिर उवाच

मेघश्यामं पीत-कौषेय-वासं, श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ।
पुण्योपेतं पुण्डरीकायताक्षं, विष्णुं वन्दे सर्वलोकैकनाथम् ॥५॥

भीमसेन उवाच

जलौघमग्ना सचराचरा धरा, विषाण-कोटयाखिल-विश्वमूर्तिना ।
समुद्धृता येन वराहरूपिणा, स मे स्वयम्भूर्भगवान् प्रसीदतु ॥६

अर्जुन उवाच

अचिन्त्यमव्यक्तमनन्तमच्युतं
विभुं प्रभुं कारणभूतभावनम् ।
त्रैलोक्य-निस्तार-विभाव-भावितं
हरिं प्रपन्नोऽस्मि गतिं महात्मनाम् ॥ ७ ॥

नकुल उवाच

यदि गमनमधस्तात् कर्मपाशानुबद्धो
यदि च कुलविहीने जायते पक्षिकीटे ।

कृमिशतमपि गत्वा जायते चान्तरात्मा
भवतु मम हृदिस्थे केशवे भक्तिरेका ॥ ८ ॥

सहदेव उवाच

तस्य यज्ञवराहस्य विष्णोरतुल-तेजसः ।
प्रणामं ये प्रकुर्वन्ति तेभ्योऽपीह नमो नमः ॥ ९ ॥

कुन्त्युवाच

स्वकर्म-फल-निर्दिष्टां यां यां योनिं व्रजाम्यहम् ।
तस्यां तस्यां हृषीकेश ! त्वयि भक्तिर्दृढास्तु मे ॥ १० ॥

माद्री उवाच

कृष्णे रताः कृष्णमनुस्मरन्ति, रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते मृत्युकाले प्रविशन्ति कृष्णं, हविर्यथा मंत्रहुतं हुताशम् ॥ ११

द्रुपद उवाच

कीटेषु पक्षिषु मृगेषु सरीसृपेषु
रक्षः-पिशाच-मनुजेष्वपि यत्र यत्र ।
जातस्य मे भवतु केशव ! ते प्रसादात्
त्वय्येव भक्तिरचलाव्यभिचारिणी च ॥ १२

सुभद्रोवाच

एकोऽपि कृष्णस्य कृतः प्रणामो, दशाश्वमेधावभृथैर्न तुल्यः ।
दशाश्वमेधी पुनरेति जन्म, कृष्णप्रणामी न पुनर्भवाय ॥१३॥

अभिमन्युरुवाच

गोविन्द गोविन्द हरे मुरारे, गोविन्द गोविन्द रथाङ्गपाणे ।
गोविन्द गोविन्द मुकुन्द कृष्ण, गोविन्द गोविन्द नमो नमस्ते ॥१४॥

धृष्टद्युम्न उवाच

श्रीराम नारायण वासुदेव, गोविन्द वैकुण्ठ मुकुन्द कृष्ण ।
श्रीकेशवानन्त नृसिंह विष्णो, मां त्राहि संसार-भुजङ्ग-दष्टम् ॥१५॥

सात्यकिरुवाच

अप्रमेय हरे विष्णो कृष्ण दामोदराच्युत ।
गोविन्दानन्द सर्वेश वासुदेव नमोऽस्तु ते ॥ १६ ॥

उद्धव उवाच

वासुदेवं परित्यज्य येऽन्यदेवमुपासते ।
तृषिता जाह्नवीतीरे कूपं वाञ्छन्ति दुर्भगाः ॥ १७ ॥

धौम्य उवाच

अपां समीपे शयनाशने गृहे, दिवा च रात्रौ च पथा च गच्छता ।
यद्यस्ति किञ्चित् सुकृतं कृतं मया, जनार्दनस्तेन कृतेन तुष्यतु ॥ १८

सञ्जय उवाच

आर्ता विषण्णाः शिथिलाश्च भीता, घोरेषु व्याघ्रादिषु वर्तमानाः ।
संकीर्त्य नारायण-शब्दमात्रं, विमुक्त-दुःखा सुखिनो भवन्ति ॥ १९

अक्रूर उवाच

अहं तु नारायण-दास-दास-, दासस्य दासस्य च दास-दासः ।
अस्त्यन्य ईशो जगतो नाराणां, तस्मादहं चान्यतरोऽस्मि लोके ॥२०

विदुर उवाच

वासुदेवस्य ये भक्ताः शान्तास्तद्गतमानसाः ।
तेषां दासस्य दासोऽहं भवेयं जन्मजन्मनि ॥ २१ ॥

भीष्म उवाच

विपरीतेषु कालेषु परिक्षीणेषु बन्धुषु ।
त्राहि मां कृपया कृष्ण शरणागत-वत्सल ॥ २२ ॥

द्रोणाचार्य उवाच

ये ये हताश्चक्रधरेण दैत्या-, स्त्रैलोक्यनाथेन जनार्दनेन ।
ते ते गतास्तन्निलयं समस्ताः, क्रोधोऽपि देवस्य वरेण तुल्यः ॥ २३

कृपाचार्य उवाच

मज्जन्मनः फलमिदं मधुकैटभारे
मत्प्रार्थनीयमदनुग्रह एष एव ।
त्वद् भृत्य-भृत्य-परिचारक-भृत्य-भृत्य-
भृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥ २४ ॥

अश्वत्थामोवाच

गोविन्द केशव जनार्दन वासुदेव
विश्वेश विश्व मधुसूदन विश्वनाथ ।
श्रीपद्मनाभ पुरुषोत्तम पुष्कराक्ष
नारायणाच्युत नृसिंह नमो नमस्ते ॥ २५ ॥

कर्ण उवाच

नान्यं वदामि न शृणोमि न चिन्तयामि
नान्यं स्मरामि न भजामि न चाश्रयामि ।
भक्त्या त्वदीय-चरणाम्बुजमन्तरेण
श्रीश्रीनिवास पुरुषोत्तम देहि दास्यम् ॥ २६ ॥

धृतराष्ट्र उवाच

नमो नमः कारणवामनाय, नारायणायामित-विक्रमाय ।
श्रीशार्ङ्ग-चक्राब्ज-गदाधराय, नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ २७ ॥

गान्धार्युवाच

त्वमेव माता च पिता त्वमेव, त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव, त्वमेव सर्वं मम देवदेव ॥ २८ ॥

द्रौपद्युवाच

यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।
कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते ॥ २९ ॥

जयद्रथ उवाच

नमः कृष्णाय देवाय ब्रह्मणेऽनन्तमूर्तये ।
योगेश्वराय योगाय त्वामहं शरणं गतः ॥ ३० ॥

विकर्ण उवाच

कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ ३१ ॥

सोमदत्त उवाच

नमः परमकल्याण नमस्ते विश्वभावन ।
वासुदेवाय शान्ताय यदूनां पतये नमः ॥ ३२ ॥

विराट उवाच

नमो ब्रह्मण्यदेवाय गो-ब्राह्मण-हिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ३३ ॥

शल्य उवाच

अतसीपुष्प-सङ्काशं पीतवाससमच्युतम्।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम्॥ ३४॥

बलभद्र उवाच

कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव।
संसारार्णव-मग्नानां प्रसीद पुरुषोत्तम॥ ३५॥

सूत उवाच

तत्रैव गङ्गा यमुना च वेणी, गोदावरी सिन्धुः सरस्वती च।
सर्वाणि तीर्थानि वसन्ति तत्र, यत्राच्युतोदार-कथा-प्रसङ्गः॥ ३६॥

यम उवाच

नरके पच्यमानस्तु यमेन परिभाषितः।
किं त्वया नार्चितो देवः केशवः क्लेशनाशनः॥ ३७॥

नारद उवाच

जन्मान्तर-सहस्रेषु तपोध्यान-समाधिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते॥ ३८॥

प्रह्लाद उवाच

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्।
तेषु तेष्वचला भक्तिरच्युतास्तु सदा त्वयि॥ ३९॥

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु॥ ४०॥

विश्वामित्र उवाच

किं तस्य दानैः किं तीर्थैः, किं तपोभिः किमध्वरैः।
यो नित्यं ध्यायते देवं, नराणां मनसि स्थितम् ॥ ४१ ॥

जमदग्निरुवाच

नित्योत्सवो भवेत्तेषां नित्यश्रीर्नित्यमङ्गलम्।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ॥ ४२ ॥

भरद्वाज उवाच

लाभस्तेषां जयस्तेषां तेषां नित्यं च मङ्गलम्।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ॥ ४३ ॥

गौतम उवाच

गोकोटिदानं ग्रहणेषु काशी-, प्रयागगङ्गायुत-कल्पवासः।
यज्ञायुतं मेरु-सुवर्णदानं, गोविन्दनाम्ना न कदापि तुल्यम् ॥४४॥

अत्रिरुवाच

गोविन्देति सदा स्नानं गोविन्देति सदा जपः।
गोविन्देति सदा ध्यानं सदा गोविन्दकीर्तनम् ॥ ४५ ॥

अक्षरं हि परं ब्रह्म गोविन्देत्यक्षरत्रयम्।
तस्मादुच्चरितं येन ब्रह्मभूयाय कल्पते ॥ ४६ ॥

श्रीबादरायणिरुवाच

अच्युतः कल्पवृक्षोऽसावनन्तः कामधेनवः।
चिन्तामणिश्च गोविन्दस्तस्मात्तन्नाम चिन्तयेत् ॥ ४७ ॥

हरिरुवाच

जयति जयति देवो देवकीनन्दनोऽयं
जयति जयति कृष्णो वृष्णिवंशप्रदीपः ।
जयति जयति मेघश्यामलः कोमलाङ्गो
जयति जयति पृथ्वीभारनाशो मुकुन्दः ॥ ४८ ॥

पिप्पलायन उवाच

श्रीमन्नृसिंहविभवे गरुडध्वजाय
तापत्रयोपशमनाय भवौषधाय ।
कृष्णाय वृश्चिकजलाग्निभुजङ्गरोग-
क्लेशव्ययाय हरये गुरवे नमस्ते ॥ ४९ ॥

आविर्होत्र उवाच

कृष्ण ! त्वदीय-पदपङ्कज-पञ्जरान्त-
मद्यैव मे विशतु मानस-राजहंसः ।
प्राण-प्रयाण-समये कफवातपित्तैः
कण्ठावरोधन-विधौ स्मरणं कुतस्ते ॥ ५० ॥

विदुर उवाच

हरेर्नाम हरेर्नाम हरेर्नामैव मम जीवनम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ ५१ ॥

वशिष्ठ उवाच

कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते ।
भस्मीभवन्ति तस्याशु महापातक-कोटयः ॥ ५२ ॥

अरुन्धत्युवाच

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणत-क्लेशनाशाय गोविन्दाय नमो नमः ॥ ५३ ॥

कश्यप उवाच

कृष्णानुस्मरणादेव पाप-संघात-पञ्जरः ।
शतधा भेदमाप्नोति गिरिर्वज्राहतो यथा ॥ ५४ ॥

दुर्योधन उवाच

जानामि धर्मं न च मे प्रवृत्ति-, र्जानाम्यधर्मं न च मे निवृत्तिः ।
त्वया हृषीकेश हृदिस्थितेन, यथा नियुक्तोऽस्मि तथा करोमि ॥५५

यंत्रस्य गुणदोषो हि क्षम्यतां मधुसूदनः ।
अहं यंत्रं भवान् यंत्री मम दोषो न विद्यते ॥ ५६ ॥

भृगुरुवाच

नामैव तव गोविन्द कलौ त्वत्तः शताधिकम् ।
ददात्युच्चारणान्मुक्तिं विनाप्यष्टाङ्गयोगतः ॥ ५७ ॥

लोमश उवाच

नमामि नारायण-पादपङ्कजं, करोमि नारायण-पूजनं सदा ।
वदामि नारायण-नाम निर्मलं, स्मरामि नारायण-तत्त्वमव्ययम् ॥५८

शौनक उवाच

स्मृते सकल-कल्याण-भाजनं यत्र जायते ।
पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥ ५९ ॥

भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः ।
योऽसौ विश्वम्भरो देवः स किं भक्तानुपेक्षते ॥ ६० ॥

एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
कीर्तयन्ति सुरश्रेष्ठं देवं नारायणं विभुम् ॥ ६१ ॥

गर्ग उवाच

नारायणेति मंत्रोऽस्ति वागस्ति वशवर्तिनी ।
तथापि नरके घोरे पतन्तीत्येतदद्भुतम् ॥ ६२ ॥

दाल्भ्य उवाच

किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने ।
नमो नारायणायेति मंत्रः सर्वार्थसाधकः ॥ ६३ ॥

वैशम्पायन उवाच

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ६४ ॥

अङ्गिरा उवाच

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ ६५ ॥

पराशर उवाच

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ ६६ ॥

पुलस्त्य उवाच

रे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये ।
नारायणाख्यपीयूषं पिब जिह्वे निरन्तरम् ॥ ६७ ॥

व्यास उवाच

सत्यं सत्यं पुनः सत्यं भुजमुत्थाप्य चोच्यते ।
न वेदाच्च परं शास्त्रं न देवः केशवात् परः ॥ ६८ ॥

धन्वन्तरिरुवाच

अच्युतानन्त--गोविन्द--नामोच्चारण-भेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ ६९ ॥

मार्कण्डेय उवाच

सा हानिस्तन्महच्छिद्रं सा चान्धजडमूढता ।
यन्मुहूर्तं क्षणं वापि वासुदेवं न चिन्तयेत् ॥ ७० ॥

अगस्त्य उवाच

निमिषं निमिषार्धं वा प्राणिनां विष्णुचिन्तनम् ।
क्रतु-कोटिसहस्रानां ध्यानमेकं विशिष्यते ॥ ७१ ॥

मनसा कर्मणा वाचा ये स्मरन्ति जनार्दनम् ।
तत्र तत्र कुरुक्षेत्रं प्रयागो नैमिषं वनम् ॥ ७२ ॥

शुक उवाच

आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ७३ ॥

महादेव उवाच

शरीरं च नवच्छिद्रं व्याधिग्रस्तं निरन्तरम् ।
औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥ ७४ ॥

सनत्कुमार उवाच

यस्य हस्ते गदाचक्रं गरुडो यस्य वाहनम् ।
शंखः करतले यस्य स मे विष्णुः प्रसीदतु ॥ ७५ ॥

श्रीकृष्ण उवाच

कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः ।
जलं भित्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ ७६ ॥

सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्वबाहु-
र्यो मां मुकुन्द-नरसिंह-जनार्दनेति ।
जीवो जपत्यनुदिनं मरणे रणे वा
पाषाणकाष्ठसदृशाय ददाम्यभीष्टम् ॥ ७७ ॥

फलश्रुतिः

इदं पवित्रमायुष्यं सर्वपाप–प्रणाशनम् ।
स्तोत्रं पाण्डवगीताख्यं ऋषिणा परिकीर्तितम् ॥ ७८ ॥

यः पठेत् प्रातरुत्थाय शृणुयादपि यो नरः ।
तस्य पुण्यफलं किञ्चित् वक्तुं कः शक्तिमान् भवेत् ॥७९॥

गयायां गोसहस्राणि दानतः पिण्डदानतः ।
यत्फलं लभते मर्त्यः कलां नार्हति षोडशीम् ॥ ८० ॥

यत्फलं मथुरां गत्वा दृष्ट्वा योगेश्वरं हरिम् ।
तत्फलं सम्यगाप्नोति सत्यमेतन्न संशयः ॥ ८१ ॥

आकाशात् पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेव-नमस्कारः केशवं प्रति गच्छति ॥ ८२ ॥

इति श्रीपाण्डवादिकृतं

श्रीप्रपन्नगीतास्तोत्रं समाप्तम् ।

# श्रीस्तोत्ररत्नम् ।

तत्त्वेन यश्चिदचिदीश्वर-तत्स्वभाव-
भोगापवर्ग-तदुपायगतीरुदारः ।
संदर्शयन्निरमिमीत पुराणरत्नं
तस्मै नमो मुनिवराय पराशराय ॥ १ ॥

माता पिता युवतयस्तनया विभूतिः
सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्बकुलाभिरामं
श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ॥ २ ॥

यन्मूर्ध्नि मे श्रुतिशिरःसु च भाति यस्मि-
न्नस्मन्मनोरथपथः सकलः समेति ।
स्तोष्यामि नः कुलधनं कुलदैवतं तत्
पादारविन्दमरविन्दविलोचनस्य ॥ ३ ॥

तत्त्वेन यस्य महिमार्णवशीकराणुः
शक्यो न मातुमपि शर्वपितामहाद्यैः ।
कर्तुं तदीयमहिमस्तुतिमुद्यताय
मह्यं नमोऽस्तु कवये निरपत्रपाय ॥ ४ ॥

यद्वा श्रमावधि यथामति चाप्यशक्तः
स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः ।
वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः
को मज्जतोरणु-कुलाचलयोर्विशेषः ॥ ५ ॥

किञ्चैष शक्त्यतिशयेन न तेऽनुकंप्यः
स्तोतापि तु स्तुतिकृतेन परिश्रमेण ।

तत्र श्रमस्तु सुलभो मम मन्दबुद्धे-
रित्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥ ६ ॥

नावेक्षसे यदि ततो भुवनान्यमूनि
नालं प्रभो भवितुमेव कुतः प्रवृत्तिः ।
एवं निसर्गसुहृदि त्वयि सर्वजन्तोः
स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम् ॥ ७ ॥

स्वाभाविकानवधिकातिशयेशितृत्वं
नारायण त्वयि न मृष्यति वैदिकः कः ।
ब्रह्मा शिवः शतमखः परमस्वराडि-
त्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥ ८ ॥

कः श्रीः श्रियः परमसत्त्वसमाश्रयः कः
कः पुण्डरीकनयनः पुरुषोत्तमः कः ।
कस्यायुतायुतशतैककलांशकांशे
विश्वं विचित्रचिदचित्प्रविभागवृत्तम् ॥ ९ ॥

वेदापहार-गुरुपातक-दैत्यपीडा-
द्यापद्विमोचन-महिष्ठफलप्रदानैः ।
कोऽन्यः प्रजापशुपती परिपाति कस्य
पादोदकेन स शिवः स्वशिरोधृतेन ॥ १० ॥

कस्योदरे हरविरिञ्चिमुखः प्रपञ्चः
को रक्षतीममजनिष्ट च कस्य नाभेः ।
क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः
कः केन वैष परवानिति शक्यशङ्कः ॥ ११ ॥

त्वां शीलरूपचरितैः परमप्रकृष्ट-
सत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः ।

प्रख्यातदैवपरमार्थविदां मतैश्च
नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥ १२ ॥

उल्लंघितत्रिविधसीमसमातिशायि-
संभावनं तव परिव्रढिमस्वभावम् ।
मायाबलेन भवताऽपि निगुह्यमानं-
पश्यन्ति केचिदनिशं त्वदनन्यभावाः ॥ १३ ॥

यदण्डमण्डान्तरगोचरं च य-, द्दशोत्तराण्यावरणानि यानि च ।
गुणाः प्रधानं पुरुषः परं पदं, परात्परं ब्रह्म च ते विभूतयः ॥१४॥

वशी वदान्यो गुणवानृजुः शुचि-, मृदुर्दयालुर्मधुरः स्थिरः समः ।
कृती कृतज्ञस्त्वमसि स्वभावतः, समस्तकल्याणगुणामृतोदधिः ॥१५॥

उपर्युपर्यब्जभुवोऽपि पूरुषान्, प्रकल्प्य ते ये शतमित्यनुक्रमात् ।
गिरस्त्वदेकैकगुणावधीप्सया, सदा स्थिता नोद्यमतोऽतिशेरते ॥१६॥

त्वदाश्रितानां जगदुद्भवस्थिति-, प्रणाशसंसारविमोचनादयः ।
भवन्ति लीलाविधयश्च वैदिका-, स्त्वदीयगंभीरमनोऽनुसारिणः ॥१७

नमो नमो वाङ्मनसातिभूमये, नमो नमो वाङ्मनसैकभूमये ।
नमो नमोऽनन्तमहाविभूतये, नमो नमोऽनन्तदयैकसिंधवे॥१८॥

न धर्मनिष्ठोऽस्मि न चात्मवेदी, न भक्तिमांस्त्वच्चरणारविन्दे ।
अकिञ्चनोऽनन्यगतिः शरण्य, त्वत्पादमूलं शरणं प्रपद्ये ॥१९॥

न निन्दितं कर्म तदस्ति लोके, सहस्रशो यन्न मया व्यधायि ।
सोऽहं विपाकावसरे मुकुन्द, क्रन्दामि संप्रत्यगतिस्तवाग्रे ॥२०॥

निमज्जतोऽनन्तभवार्णवान्त-, श्चिराय मे कूलमिवासि लब्धः ।
त्वयापि लब्धं भगवन्निदानी-, मनुत्तमं पात्रमिदं दयायाः ॥२१॥

अभूतपूर्वं मम भावि किं वा, सर्वं सहे मे सहजं हि दुःखम् ।
किन्तु त्वदग्रे शरणागतानां, पराभवो नाथ न तेऽनुरूपः ॥२२॥

निरासकस्यापि न तावदुत्सहे, महेश हातुं तव पादपङ्कजम् ।
रुषा निरस्तोऽपि शिशुः स्तनं धयो, न जातु मातुश्चरणौ जिहासति ॥

तवामृतस्यन्दिनि पादपंकजे, निवेदितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे, मधुव्रतो नेक्षुरकं हि वीक्षते ॥२४॥

त्वदंघ्रिमुद्दिश्य कदापि केनचिद्, यथा तथा वापि सकृत्कृतोऽञ्जलिः ।
तदैव मुष्णात्यशुभान्यशेषतः, शुभानि पुष्णाति न जातु हीयते ॥२५

उदीर्ण-संसारदवाशुशुक्षणिं, क्षणेन निर्वाप्य परां च निर्वृतिम् ।
प्रयच्छति त्वच्चरणारुणांबुज-, द्वयानुरागामृतसिंधुशीकरः ॥२६॥

विलासविक्रान्तपरावरालयं, नमस्यदार्तिक्षयणे कृतक्षणम् ।
धनं मदीयं तव पादपंकजं, कदा नु साक्षात्करवाणि चक्षुषा ॥२७॥

कदा पुनः शंखरथाङ्गकल्पक-, ध्वजारविन्दांकुशवज्रलांछनम् ।
त्रिविक्रम त्वच्चरणांबुजद्वयं, मदीय मूर्धानमलंकरिष्यति ॥२८॥

विराजमानोज्ज्वलपीतवाससं, स्मितातसीसूनुसमामलच्छविम् ।
निमग्ननाभिं तनुमध्यमुन्नतं, विशालवक्षःस्थल-शोभिलक्षणम् ॥२९॥

चकासतं ज्याकिणकर्कशैः शुभै-, श्चतुर्भिराजानुविलंबिभिर्भुजैः ।
प्रियावतंसोत्पलकर्णभूषण-, श्लथालकाबंधविमर्दशंसिभिः ॥३०॥

उदग्रपीनांसविलंबिकुण्डला-, लकावली-बंधुर-कंबु-कंधरम् ।
मुखश्रिया न्यक्कृतपूर्णनिर्मला-, मृतांशुबिंबांबुरुहोज्ज्वलश्रियम् ॥३१

प्रबुद्धमुग्धांबुजचारुलोचनं, सविभ्रम भ्रूलतमुज्ज्वलाधरम् ।
शुचिस्मितं कोमलगण्डमुन्नसं, ललाटपर्यन्तविलंबितालकम् ॥३२॥

स्फुरत्किरीटाङ्गदहारकण्ठिका-, मणीन्द्रकाञ्चीगुणनूपुरादिभिः ।
रथाङ्गशंखासिगदाधनुर्वरै- र्लसत्तुलस्या वनमालयोज्ज्वलम् ॥३३॥

चकर्थ यस्या भवनं भुजान्तरं, तव प्रियं धाम यदीय जन्मभूः ।
जगत्समग्रं यदपाङ्गसंश्रयं, यदर्थमम्भोधिरमन्थ्यबन्धि च ॥३४॥

स्ववैश्वरूप्येण सदानुभूतया-, प्यपूर्ववद् विस्मयमादधानया ।
गुणेन रूपेण विलासचेष्टितैः, सदा तवैवोचितया तव श्रिया ॥३५॥

तया सहासीनमनन्तभोगिनि, प्रकृष्टविज्ञानबलैकधामनि ।
फणामणिव्रातमयूखमण्डल-, प्रकाशमानोदरदिव्यधामनि ॥३६॥

निवासशय्यासनपादुकांशुको-, पधान-वर्षातपवारणादिभिः ।
शरीरभेदैस्तव शेषतां गतै-, र्यथोचितं शेष इतीर्यते जनैः ॥३७॥

दासः सखा वाहनमासनं ध्वजो,यस्ते वितानं व्यजनं त्रयीमयः ।
उपस्थितं तेन पुरो गरुत्मता, त्वदंघ्रिसंमर्दकिणाङ्कशोभिना ॥३८॥

त्वदीयभुक्तोज्झितशेषभोजिना, त्वया निसृष्टात्मभरेण यद्यथा ।
प्रियेण सेनापतिना निवेदितं, तथानुजातं तमुदारवीक्षणैः ॥३९॥

हताखिलक्लेशमलैः स्वभावतः, सदानुकूल्यैकरसैस्तवोचितैः ।
गृहीततत्तत्परिचारसाधनै-, र्निषेव्यमाणं सचिवैर्यथोचितम् ॥४०॥

अपूर्वनानारसभावनिर्भर- प्रबुद्धया मुग्धविदग्धलीलया ।
क्षणाणुवत्क्षिप्तपरादिकालया, प्रहर्षयन्तं महिषीं महाभुजम् ॥४१॥

अचिन्त्यदिव्याद्भुतनित्ययौवनं, स्वभावलावण्यमयामृतोदधिम् ।
श्रियः श्रियं भक्तजनैकजीवितं, समर्थमापत्सखमार्थिकल्पकम् ॥४२॥

भवन्तमेवानुचरन्निरन्तर-, प्रशान्त-निःशेष-मनोरथान्तरः ।
कदाहमैकान्तिकनित्यकिंकरः,प्रहर्षयिष्यामि त नाथ जीवितम् ॥४३॥

धिगशुचिमविनीतं निर्दयं मामलज्जं
परमपुरुष योऽहं योगिवर्याग्रगण्यैः ।
विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं
तव परिजनभावं कामये कामवृत्तः ॥४४॥

अपराधसहस्रभाजनं, पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे, कृपया केवलमात्मसात्कुरु ॥४५॥

अविवेकघनान्धदिङ्मुखे, बहुधा सन्ततदुःखवर्षिणि ।
भगवन् भव दुर्दिने पथः, स्खलितं मामवलोकयाच्युत ॥४६॥

न मृषा परमार्थमेव मे, शृणु विज्ञापनमेकमग्रतः ।
यदि मे न दयिष्यसे ततो, दयनीयस्तव नाथ दुर्लभः ॥४७॥

तदहं त्वदृते न नाथवान्, मदृते त्वं दयनीयवान्न च ।
विधिनिर्मितमेतदन्वयं, भगवन् पालय मास्म जीहय ॥४८॥

वपुरादिषु योऽपि कोऽपि वा, गुणतोऽमानि यथातथाविधः ।
तदहं तव पादपद्मयो-, रहमद्यैव मया समर्पितः ॥४९॥

मम नाथ यदस्ति योऽस्म्यहं, सकलं तद्धि तवैव माधव ।
नियतस्वमिति प्रबुद्धधी-, रथवा किन्नु समर्पयामि ते ॥५०॥

अवबोधितवानिमां यथा, मयि नित्यां भवदीयतां स्वयम् ।
कृपयैवमनन्यभोग्यतां, भगवन् भक्तिमपि प्रयच्छ मे ॥५१॥

तव दास्यसुखैकसंगिनां, भवनेष्वस्त्वपि कीटजन्म मे ।
इतरावसथेषु मास्म भू-, दपि मे जन्म चतुर्मुखात्मना ॥५२॥

सकृत्त्वदाकारविलोकनाशया, तृणीकृतानुत्तमभुक्तिमुक्तिभिः ।
महात्मभिर्मामवलोक्यतां नय, क्षणेऽपि ते यद्विरहोऽतिदुःसहः ॥५३॥

न देहं न प्राणान्न च सुखमशेषाभिलषितं
न चात्मानं नान्यत्तव किमपि शेषत्वविभवात् ।
बहिर्भूतं नाथ क्षणमपि सहे यातु शतधा
विनाशं तत्सत्यं मधुमथन विज्ञापनमिदम् ॥५४॥

दुरन्तस्यानादेरपरिहरणीयस्य महतो
विहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि ।
दयासिन्धो बन्धो निरवधिकवात्सल्यजलधे-
स्तव स्मारं स्मारं गुणगणमितीच्छामि गतभीः ॥५५॥

अनिच्छन्नप्येवं यदि पुनरपीच्छन्निव रज-
स्तमश्छन्नच्छद्म-स्तुतिवचनभङ्गीमरचयम् ।
तथापीत्थं रूपं वचनमवलंब्यापि कृपया
त्वमेवैवंभूतं धरणिधर मे शिक्षय मनः ॥५६॥

पिता त्वं माता त्वं दयित-तनयस्त्वं प्रियसुहृत्
त्वमेव त्वं मित्रं गुरुरपि गतिश्चासि जगताम् ।
त्वदीयस्तद्भृत्यस्तव परिजनस्तद्गतिरहं
प्रपन्नश्चैवं स त्वहमपि तवैवास्मि हि भरः ॥५७॥

जनित्वाहं वंशे महति जगति ख्यातयशसां
शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम् ।
निसर्गादेव त्वच्चरणकमलैकान्तमनसा-
मधोधः पापात्मा शरणद निमज्जामि तमसि ॥५८॥

अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः
कृतघ्नो दुर्मानी स्मरपरवशो वंचनपरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधे-
रपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥५९॥

रघुवर यदभूस्त्वं तादृशो वायसस्य
प्रणत इति दयालुर्यस्य चैद्यस्य कृष्ण ।
प्रतिभवमपराद्धुमुग्ध सायुज्यदोऽभू-
र्वद किमपदमागस्तस्य तेऽस्ति क्षमायाः ॥६०॥

ननु प्रपन्नः सकृदेव नाथ, तवाहमस्मीति च याचमानः ।
तवानुकम्प्यः स्मरतः प्रतिज्ञां, मदेकवर्जं किमिति व्रतं ते ॥६१॥

अकृत्रिम त्वच्चरणारविन्द-; प्रेमप्रकर्षावधिमात्मवन्तम् ।
पितामहं नाथमुनिं विलोक्य, प्रसीद मद्वृत्तमचिन्तयित्वा ॥६२॥

इति श्रीयामुनाचार्यविरचितं श्रीस्तोत्ररत्नं समाप्तम् ।

# श्रीगोविन्ददामोदरस्तोत्रम् ।

अग्रे कुरूणामथ पाण्डवानां, दुःशासनेनाहृतवस्त्रकेशा ।
कृष्णा तदाक्रोशदनन्यनाथा, गोविन्द दामोदर माधवेति ॥ १ ॥

श्रीकृष्ण विष्णो मधुकैटभारे,भक्तानुकम्पिन् भगवन् मुरारे ।
त्रायस्व मां केशव लोकनाथ, गोविन्द दामोदर माधवेति ॥ २ ॥

विक्रेतुकामाखिलगोपकन्या, मुरारिपादार्पितचित्तवृत्तिः ।
दध्यादिकं मोहवशादवोचद्, गोविन्द दामोदर माधवेति ॥ ३ ॥

उलूखले सम्भृततण्डुलांश्च, संघट्टयन्तो मुसलैः प्रमुग्धाः ।
गायन्ति गोप्यो जनितानुरागा,गोविन्द दामोदर माधवेति ॥ ४ ॥

काचित्कराम्भोजपुटे निषण्णं, क्रीडाशुकं किंशुकरक्ततुण्डम् ।
अध्यापयामास सरोरुहाक्षी, गोविन्द दामोदर माधवेति ॥ ५ ॥

गृहे गृहे गोपवधूसमूहः, प्रतिक्षणं पिञ्जरसारिकाणाम् ।
स्खलद्गिरं वाचयितुं प्रवृत्तो,गोविन्द दामोदर माधवेति ॥ ६ ॥

पर्य्यङ्किकाभाजमलं कुमारं, प्रस्वापयन्त्योऽखिलगोपकन्याः ।
जगुः प्रबन्धं स्वरतालबन्धं, गोविन्द दामोदर माधवेति ॥ ७ ॥

रामानुजं वीक्षणकेलिलोलं, गोपी गृहीत्वा नवनीतगोलम् ।
आबालकं बालकमाजुहाव, गोविन्द दामोदर माधवेति ॥ ८ ॥

विचित्रवर्णाभरणाभिरामे,ऽभिधेहि वक्त्राम्बुजराजहंसि ।
सदा मदीये रसनेऽग्ररङ्गे, गोविन्द दामोदर माधवेति ॥ ९ ॥

अङ्काधिरूढं शिशुगोपगूढं, स्तनं धयन्तं कमलैककान्तम् ।
सम्बोधयामास मुदा यशोदा, गोविन्द दामोदर माधवेति ॥१०॥

क्रीडन्तमन्तर्व्रजमात्मजं स्वं, समं वयस्यैः पशुपालबालैः ।
प्रेम्णा यशोदा प्रजुहाव कृष्णं, गोविन्द दामोदर माधवेति ॥११॥

यशोदया गाढमुलूखलेन, गोकण्ठपाशेन निबध्यमानः ।
रुरोद मन्दं नवनीतभोजी, गोविन्द दामोदर माधवेति ॥१२॥

निजाङ्गने कङ्कणकेलिलोलं, गोपी गृहीत्वा नवनीतगोलम् ।
आमर्दयत्पाणितलेन नेत्रे, गोविन्द दामोदर माधवेति ॥१३॥

गृहे गृहे गोपवधूकदम्बाः, सर्वे मिलित्वा समवाययोगे ।
पुण्यानि नामानि पठन्ति नित्यं,गोविन्द दामोदर माधवेति॥१४॥

मन्दारमूले वदनाभिरामं, बिम्बाधरे पूरितवेणुनादम् ।
गोगोपगोपीजनमध्यसंस्थं, गोविन्द दामोदर माधवेति ॥१५॥

उत्थाय गोप्योऽपररात्रभागे, स्मृत्वा यशोदासुतबालकेलिम् ।
गायन्ति प्रोच्चैर्दधि मन्थयन्त्यो,गोविन्द दामोदर माधवेति ॥१६॥

जग्धोऽथ दत्तो नवनीतपिण्डो, गृहे यशोदा विचिकित्सयन्ती ।
उवाच सत्यं वद हे मुरारे, गोविन्द दामोदर माधवेति ॥१७॥

अभ्यर्च्य गेहं युवतिः प्रवृद्ध-, प्रेमप्रवाहा दधि निर्ममन्थ ।
गायन्ति गोप्योऽथ सखीसमेता, गोविन्द दामोदर माधवेति ॥१८॥

क्वचित् प्रभाते दधिपूर्णपात्रे, निक्षिप्य मन्थं युवती मुकुन्दम् ।
आलोक्य गानं विविधं करोति, गोविन्द दामोदर माधवेति ॥१९॥

क्रीडापरं भोजनमञ्जनार्थं, हितैषिणी स्त्री तनुजं यशोदा ।
आजूहवत् प्रेमपरिप्लुताक्षी, गोविन्द दामोदर माधवेति ॥२०॥

सुखं शयानं निलये च विष्णुं, देवर्षिमुख्या मुनयः प्रपन्नाः ।
तेनाच्युते तन्मयतां व्रजन्ति, गोविन्द दामोदर माधवेति ॥२१॥

विहाय निद्रामरुणोदये च, विधाय कृत्यानि च विप्रमुख्याः ।
वेदावसाने प्रपठन्ति नित्यं, गोविन्द दामोदर माधवेति ॥२२॥

वृन्दावने गोपगणाश्च गोप्यो, विलोक्य गोविन्दवियोगखिन्नाम् ।
राधां जगुः साश्रुविलोचनाभ्यां, गोविन्द दामोदर माधवेति ॥२३॥

प्रभातसञ्चारगता नु गाव-, स्तद् रक्षणार्थं तनयं यशोदा ।
प्राबोधयत् पाणितलेन मन्दं, गोविन्द दामोदर माधवेति ॥२४॥

प्रवालशोभा इव दीर्घकेशा, वाताम्बुपर्णाशनपूतदेहाः ।
मूले तरूणां मुनयः पठन्ति, गोविन्द दामोदर माधवेति ॥२५॥

एवं ब्रुवाणा विरहातुरा भृशं, व्रजस्त्रियः कृष्णविषक्तमानसाः ।
विसृज्य लज्जां रुरुदुः स्म सुस्वरं, गोविन्द दामोदर माधवेति॥२६॥

गोपी कदाचिन्मणिपिञ्जरस्थं, शुकं वचो वाचयितुं प्रवृत्ता ।
आनन्दकन्द व्रजचन्द्र कृष्ण, गोविन्द दामोदर माधवेति ॥२७॥

गोवत्सबालैः शिशुकाकपक्षं, बध्नन्तमम्भोजदलायताक्षम् ।
उवाच माता चिबुकं गृहीत्वा, गोविन्द दामोदर माधवेति ॥२८॥

प्रभातकाले वरवल्लवौघा, गोरक्षणार्थं धृतवेत्रदण्डाः ।
आकारयामासुरनन्तमाद्यं, गोविन्द दामोदर माधवेति ॥२९॥

जलाशये कालियमर्दनाय, यदा कदम्बादपतन्मुरारिः ।
गोपाङ्गनाश्चुक्रुशुरेत्य गोपा, गोविन्द दामोदर माधवेति ॥३०॥

अक्रूरमासाद्य यदा मुकुन्द-, श्चापोत्सवार्थं मथुरां प्रविष्टः ।
तदा स पौरैर्जयतीत्यभाषि, गोविन्द दामोदर माधवेति ॥३१॥

कंसस्य दूतेन यदैव नीतौ, वृन्दावनान्ताद् वसुदेवसूनू ।
रुरोद गोपी भवनस्य मध्ये, गोविन्द दामोदर माधवेति ॥३२॥

सरोवरे कालियनागबद्धं, शिशुं यशोदातनयं निशम्य ।
चक्रुर्लुठन्त्यः पथि गोपबाला, गोविन्द दामोदर माधवेति ॥३३॥

अक्रूरयाने यदुवंशनाथं, संगच्छमानं मथुरां निरीक्ष्य ।
ऊचुर्वियोगात् किल गोपबाला, गोविन्द दामोदर माधवेति ॥३४॥

चक्रन्द गोपी नलिनीवनान्ते, कृष्णेन हीना कुसुमे शयाना ।
प्रफुल्लनीलोत्पललोचनाभ्यां, गोविन्द दामोदर माधवेति ॥३५॥

मातापितृभ्यां परिवार्यमाणा, गेहं प्रविष्टा विललाप गोपी ।
आगत्य मां पालय विश्वनाथ, गोविन्द दामोदर माधवेति ॥३६॥

वृन्दावनस्थं हरिमाशु बुद्ध्वा, गोपी गता कापि वनं निशायाम् ।
तत्राप्यदृष्ट्वातिभयादवोचद्, गोविन्द दामोदर माधवेति ॥३७॥

सुखं शयाना निलये निजेऽपि, नामानि विष्णोः प्रवदन्ति मर्त्याः ।
ते निश्चितं तन्मयतां व्रजन्ति, गोविन्द दामोदर माधवेति ॥३८॥

सा नीरजाक्षीमवलोक्य राधां, रुरोद गोविन्दवियोगखिन्नाम् ।
सखी प्रफुल्लोत्पललोचनाभ्यां, गोविन्द दामोदर माधवेति ॥३९॥

जिह्वे रसज्ञे मधुरप्रिया त्वं, सत्यं हितं त्वां परमं वदामि ।
आवर्णयेथा मधुराक्षराणि, गोविन्द दामोदर माधवेति ॥४०॥

आत्यन्तिकव्याधिहरं जनानां, चिकित्सकं वेदविदो वदन्ति ।
संसारतापत्रयनाशबीजं, गोविन्द दामोदर माधवेति ॥४१॥

ताताज्ञया गच्छति रामचन्द्रे, सलक्ष्मणेऽरण्यचये ससीते ।
चक्रन्द रामस्य निजा जनित्री,गोविन्द दामोदर माधवेति ॥४२॥

एकाकिनी दण्डककाननान्तात्,सा नीयमाना दशकन्धरेण ।
सीता तदाक्रन्ददनन्यनाथा, गोविन्द दामोदर माधवेति ॥४३॥

रामाद्वियुक्ता जनकात्मजा सा, विचिन्तयन्ती हृदि रामरूपम् ।
रुरोद सीता रघुनाथ पाहि, गोविन्द दामोदर माधवेति ॥४४॥

प्रसीद विष्णो रघुवंशनाथ, सुरासुराणां सुखदुःखहेतो ।
रुरोद सीता तु समुद्रमध्ये, गोविन्द दामोदर माधवेति ॥४५॥

अन्तर्जले ग्राहगृहीतपादो, विसृष्टविक्लिष्टसमस्तबन्धुः ।
तदा गजेन्द्रो नितरां जगाद, गोविन्द दामोदर माधवेति ॥४६॥

हंसध्वजः शंखयुतो ददर्श, पुत्रं कटाहे प्रपतन्तमेनम् ।
पुण्यानि नामामि हरेर्जपन्तं, गोविन्द दामोदर माधवेति ॥४७॥

दुर्वाससो वाक्यमुपेत्य कृष्णा, सा चाब्रवीत् काननवासिनीशम् ।
अन्तःप्रविष्टं मनसाजुहाव, गोविन्द दामोदर माधवेति ॥४८॥

ध्येयः सदा योगिभिरप्रमेयः, चिन्ताहरश्चिन्तितपारिजातः ।
कस्तूरिकाकलितनीलवर्णो, गोविन्द दामोदर माधवेति ॥४९॥

संसारकूपे पतितोऽत्यगाधे, मोहान्धपूर्णे विषयाभितप्ते ।
करावलम्बं मम देहि विष्णो, गोविन्द दामोदर माधवेति ॥५०॥

त्वामेव याचे मम देहि जिह्वे, समागते दण्डधरे कृतान्ते ।
वक्तव्यमेवं मधुरं सुभक्त्या, गोविन्द दामोदर माधवेति ॥५१॥

भजस्व मंत्रं भवबन्धमुक्त्यै, जिह्वे रसज्ञे सुलभं मनोज्ञम् ।
द्वैपायनाद्यैर्मुनिभिः प्रजप्तं, गोविन्द दामोदर माधवेति ॥५२॥

गोपाल वंशीधर रूपसिन्धो, लोकेश नारायण दीनबन्धो ।
उच्चस्वरैस्त्वं वद सर्वदैव, गोविन्द दामोदर माधवेति ॥५३॥

जिह्वे सदैवं भज सुन्दराणि, नामानि कृष्णस्य मनोहराणि ।
समस्तभक्तार्तिविनाशनानि, गोविन्द दामोदर माधवेति ॥५४॥

गोविन्द गोविन्द हरे मुरारे,गोविन्द गोविन्द मुकुन्द कृष्ण ।
गोविन्द गोविन्द रथाङ्गपाणे, गोविन्द दामोदर माधवेति ॥५५॥

सुखावसाने त्विदमेव सारं, दुःखावसाने त्विदमेव गेयम् ।
देहावसाने त्विदमेव जाप्यं, गोविन्द दामोदर माधवेति ॥५६॥

दुर्वारवाक्यं परिगृह्य कृष्णा,मृगीव भीता तु कथं कथञ्चित् ।
सभां प्रविष्टा मनसाजुहाव, गोविन्द दामोदर माधवेति ॥५७॥

श्रीकृष्ण राधावर गोकुलेश, गोपाल गोवर्धननाथ विष्णो ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥५८॥

श्रीनाथ विश्वेश्वर विश्वमूर्ते, श्रीदेवकीनन्दन दैत्यशत्रो ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥५९॥

गोपीपते कंसरिपो मुकुन्द, लक्ष्मीपते केशव वासुदेव ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६०॥

गोपीजनाह्लादकर व्रजेश, गोचारणारण्यकृतप्रवेश ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६१॥

प्राणेश विश्वम्भर कैटभारे, वैकुण्ठ नारायण चक्रपाणे ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६२॥

हरे मुरारे मधुसूदनाद्य, श्रीराम सीतावर रावणारे ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६३॥

श्रीयादवेन्द्राद्रिधराम्बुजाक्ष, गोगोपगोपीसुखदानदक्ष ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६४॥

धराभरोत्तारणगोपवेष, विहारलीलाकृतबन्धुशेष ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६५॥

बकीबकाघासुरधेनुकारे, केशीतृणावर्तविघातदक्ष ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६६॥

श्रीजानकीजीवन रामचन्द्र, निशाचरारे भरताग्रजेश ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६७॥

नारायणानन्त हरे नृसिंह, प्रह्लादबाधाहर हे कृपालो ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६८॥

लीलामनुष्याकृतिरामरूप, प्रतापदासीकृतसर्वभूप ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥६९॥

श्रीकृष्ण गोविन्द हरे मुरारे, हे नाथ नारायण वासुदेव ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥७०॥

वक्तुं समर्थोऽपि न वक्ति कश्चि-, दहो जनानां व्यसनाभिमुख्यम् ।
जिह्वे पिबस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ॥७१॥

इति श्रीबिल्वमङ्गल–विरचितं श्रीगोविन्ददामोदरस्तोत्रं संपूर्णम् ।

# श्रीत्रिभङ्गीछन्दःस्तवः ।

यमलार्जुनभञ्जनमाश्रितरञ्जनमहिगञ्जनघनलास्यभरं
पशुपालपुरन्दरमभिसृतकन्दरमतिसुन्दरमरविन्दकरम् ।
वरगोपवधूजनविरचितपूजनमुरुकूजननववेणुधरं
स्मरनर्मविचक्षणमखिलविलक्षणतनुलक्षणमतिदक्षतरम् ॥ १ ॥

प्रणताशनिपञ्जरमम्बरपिञ्जरमरिकुञ्जरहरिमिन्दुमुखं
गोमण्डलरक्षिणमनुकृतपक्षिणमतिदक्षिणममितात्मसुखम् ।
गुरुगैरिकमण्डितमनुनयपण्डितमवखण्डितपुरुहूतमखं
व्रजकमलविरोचनमलिकसुरोचनगोरोचनमतिताम्रनखम् ॥२॥

उन्मदरतिनायकशाणितसायकविनिधायकचलचिल्लिलत-
मुद्धतसङ्कोचनमम्बुजलोचनमघमोचनममरालिनतम् ।
निखिलाधिकगौरवमुज्ज्वलसौरभमतिगौरभपशुपीषु रतं
कोमलपदपल्लवमभ्रमुवल्लभरुचिदुर्लभसविलासगतम् ॥ ३ ॥

भुजमूर्ध्नि विशङ्कटमधिगतशङ्कटनतकङ्कटमटवीषु चलं
नवनीपकरम्बितवनरोलम्बितमवलम्बितकलकण्ठकलम् ।
दुर्जनतृणपावकमनुचरशावकनिकरावकमरुणोष्ठदलं
निजविक्रमचर्चितभुजगुरुगर्वितगन्धर्वितदनुजार्दिबलम् ॥४॥

श्रुतिरत्नविभूषणरुचिजितपूषणमलिदूषणनयनान्तगतिं
यमुनातटतल्पितपुष्पमनल्पितमदजल्पितदयिताप्ररतिम् ।
वन्देमहि वन्दितनन्दममन्दितकुलमन्धितखलकंसमतिं
त्वामिह दामोदर हलधरसोदर हर नो दरमनुबद्धरतिम् ॥५॥

इति श्रीमद्रूपगोस्वामि–विरचित–स्तवमालायां
श्रीत्रिभङ्गीछन्दःस्तवः संपूर्णम् ।

## श्रीगाथाछन्दःस्तवः ।

परितोषितगोपवधूपटलं
पटलंघितकाञ्चनसारचयम् ।
रचयन्तमुदारविलासकलां
सकलाञ्चितपादमगाधबलम् ।
धवलं नवकीर्तिकुलैरमितम् ॥ १ ॥

इति श्रीमद्रूपगोस्वामि–विरचित–स्तवमालायां
श्रीगाथाछन्दःस्तवः समाप्तः ।

## श्रीकृष्णस्य प्रणामप्रणयाख्यस्तवः ।

कन्दर्पकोटिरम्याय स्फुरदिन्दीवरत्विषे ।
जगन्मोहनलीलाय नमो गोपेन्द्रसूनवे ॥ १ ॥

कृष्णलाकृतहाराय कृष्णलावण्यशालिने ।
कृष्णाकूलकरीन्द्राय कृष्णाय करवै नमः ॥ २ ॥

सर्वानन्दकदम्बाय कदम्बकुसुमस्रजे ।
नमः प्रेमावलम्बाय प्रलम्बारिकनीयसे ॥ ३ ॥

कुण्डलस्फुरदंसाय वंशायत्तमुखश्रिये ।
राधामानसहंसाय व्रजोत्तंसाय ते नमः ॥ ४ ॥

नमः शिखण्डचूडाय दण्डमण्डितपाणये ।
कुण्डलीकृतपुष्पाय पुण्डरीकेक्षणाय ते ॥ ५ ॥

राधिकाप्रेममाध्वीकमाधुरीमुदितान्तरम् ।
कन्दर्पवृन्दसौन्दर्यं गोविन्दमभिवादये ॥ ६ ॥

शृङ्गाररसशृङ्गारं कर्णिकारात्तकर्णिकम् ।
वन्दे श्रिया नवाभ्राणां बिभ्राणं विभ्रमं हरिम् ॥ ७ ॥

साध्वीव्रतमणिव्रातपश्यतोहरवेणवे ।
कह्लारकृतचूडाय शंखचूडभिदे नमः ॥ ८ ॥

राधिकाधरबन्धूकमकरन्दमधुव्रतम् ।
दैत्यसिन्धुरपारीन्द्रं वन्दे गोपेन्द्रनन्दनम् ॥ ९ ॥

बर्हेन्द्रायुधरम्याय जगज्जीवनदायिने ।
राधाविद्युद्वृताङ्गाय कृष्णाम्भोदाय ते नमः ॥१०॥

प्रेमान्धबल्लवीवृन्दलोचनेन्दीवरेन्दवे ।
काश्मीरतिलकाढ्याय नमः पीताम्बराय ते ॥११॥

गीर्वाणेशमदोद्दामदावनिर्वाणनीरदम् ।
कन्दुकीकृतशैलेन्द्रं वन्दे गोकुलबान्धवम् ॥१२॥

दैन्यार्णवे निमग्नोऽस्मि मन्तुग्रावभरार्दितः ।
दुष्टे कारुण्यपारीण मयि कृष्ण कृपां कुरु ॥१३॥

आधारोऽप्यपराधानामविवेकहतोऽप्यहम् ।
त्वत्कारुण्यप्रतीक्षोऽस्मि प्रसीद मयि माधव ॥१४॥

इति श्रीमद्रूपगोस्वामि-विरचित-स्तवमालायां
श्रीकृष्णस्य प्रणामप्रणयाख्यस्तवः समाप्तः ।

# श्रीहरिकुसुमस्तबकम्।

गतिगञ्जितमत्ततरद्विरदं रदनिन्दितसुन्दरकुन्दमदम्।
मदनार्बुदरूपमदघ्नरुचिं रुचिरस्मितमञ्जरिमञ्जुमुखम्॥ १॥

मुखरीकृतवेणुहृतप्रमदं मदवल्गितलोचनतामरसम्।
रसपूरविकासककेलिपरं परमार्थपरायणलोकगतिम्॥ २॥

गतिमण्डितयामुनतीरभुवं भुवनेश्वरवन्दितचारुपदम्।
पदकोज्ज्वलकोमलकण्ठरुचं रुचकाक्तविशेषकवल्गुतरम्॥ ३॥

तरलप्रचलाकपरीतशिखं शिखरीन्द्रधृतिप्रतिपन्नभुजम्।
भुजगेन्द्रफणाङ्गणरङ्गधरं धरकन्दरखेलनलुब्धहृदम्॥ ४॥

हृदयालुसुहृद्गणदत्तमहं महनीयकथाकुलधूतकलिम्।
कलिताखिलदुर्जयबाहुबलं बलबल्लवशावकसंनिहितम्॥ ५॥

हितसाधुसमीहितकल्पतरुं तरुणीगणनूतनपुष्पशरम्।
शरणागतरक्षणदक्षतमं तमसाधुकुलोत्पलचण्डकरम्॥ ६॥

करपद्ममिलत्कुसुमस्तबकं बकदानवमत्तकरीन्द्रहरिम्।
हरिणीगणहारकवेणुकलं कलकण्ठरवोज्ज्वलकण्ठरणम्॥ ७॥

रणखण्डितदुर्जनपुण्यजनं जनमङ्गलकीर्तिलताप्रभवम्।
भवसागरकुम्भजनामगुणं गुणसङ्गविवर्जितभक्तगणम्॥ ८॥

गणनातिगदिव्यगुणोल्लसितं सितरश्मिसहोदरवक्त्रवरम्।
वरदृप्तवृषासुरदावघनं घनविभ्रमवेशविहारमयम्॥ ९॥

मयपुत्रतमःक्षयपूर्णविधुं विधुरीकृतदानवराजकुलम्।
... ... कुलनन्दनमत्र नमामि हरिम्॥१०॥

उरसि परिस्फुरदिन्दिरमिन्दिन्दिरमन्दिरस्रजोल्लसितम्।
हरिमङ्गनातिमङ्गलमङ्गलसच्चन्दनं वन्दे॥११॥

इति श्रीमद्रूपगोस्वामि-विरचित-स्तवमालायां श्रीहरिकुसुमस्तबकं समाप्तम्।

# श्रीमङ्गलगीतम् ।

श्रितकमलाकुचमण्डल धृतकुण्डल ए ।
कलितललितवनमाल जय जय देव हरे ॥ १ ॥

दिनमणिमण्डलमण्डन भवखण्डन ए ।
मुनिजनमानसहंस जय जय देव हरे ॥ २ ॥

कालियविषधरगञ्जन जनरञ्जन ए ।
यदुकुलनलिनदिनेश जय जय देव हरे ॥ ३ ॥

मधुमुरनरकविनाशन गरुडासन ए ।
सुरकुलकेलिनिदान जय जय देव हरे ॥ ४ ॥

अमलकमलदललोचन भवमोचन ए ।
त्रिभुवनभवननिधान जय जय देव हरे ॥ ५ ॥

जनकसुताकृतभूषण जितदूषण ए ।
समरशमितदशकण्ठ जय जय देव हरे ॥ ६ ॥

अभिनवजलधरसुन्दर धृतमन्दर ए ।
श्रीमुखचन्द्रचकोर जय जय देव हरे ॥ ७ ॥

तव चरणे प्रणता वयमिति भावय ए ।
कुरु कुशलं प्रणतेषु जय जय देव हरे ॥ ८ ॥

श्रीजयदेवकवेरिदं कुरुते मुदम् ।
मङ्गलमञ्जुलगीतं जय जय देव हरे ॥ ९ ॥

इति श्रीजयदेवगोस्वामि–विरचितं

श्रीमङ्गलगीतं संपूर्णम् ।

# श्रीराधाप्रबोधाय वेणुगीतम् ।

कृष्णचन्द्रः पुरा निर्गतो मानतो,ह्यागतः सोऽपि राधे युगान्ते पुनः ।
नाशयन्सर्वदुःखानि ते सन्निधौ, सञ्जगौ वेणुना देवकीनन्दनः ॥१॥

छुङ्छुङ्गे निनादे मृदंगे कलं, वाद्यमाने सुरस्त्रीजनैः सेवितः ।
रासरम्याङ्गणे नृत्यकृन्माधवः, सञ्जगौ वेणुना देवकीनन्दनः ॥२॥

चारुचामीकराभासिवासोविभु-, र्वैजयन्तीभराभासितोरःस्थलः ।
नन्दवृन्दावने गोपिकामध्यगः, सञ्जगौ वेणुना देवकीनन्दनः ॥३॥

चारुचन्द्रावलीलोचनाचुंबितो, गोपगोवृन्दगोपालिकावल्लभः ।
कंसवंशाटवीदाहदावानलः, सञ्जगौ वेणुना देवकीनन्दनः ॥४॥

बालिकातालिकाताललीलालया-, संगसन्दर्शितभ्रूलताविभ्रमः ।
गोपिकागीतदत्तावधानः स्वयं, सञ्जगौ वेणुना देवकीनन्दनः ॥५॥

मौलिमालांगदैः किंकिणीकुण्डलै-,र्भूषितो नन्दनो नन्दराजस्य च ।
प्रीतिकृत्सुन्दरो देवि प्रीत्या तव, सञ्जगौ वेणुना देवकीनन्दनः ॥६॥

पारिजातं समुद्धृत्य राधावरो, रोपयामास भामाभयादङ्गणे ।
वल्लवीवृन्दवृन्दारिकाकामुकः, सञ्जगौ वेणुना देवकीनन्दनः ॥७॥

ऋक्षराजं विनिर्जित्य नीत्वा मणिं, सन्ददौ भीतवद् भूमिनाथाय च ।
सोऽपि रासे समागत्य रासेश्वरो; सञ्जगौ वेणुना देवकीनन्दनः ॥८॥

इति श्रीगर्गसंहितोक्तं

श्रीराधाप्रबोधाय वेणुगीतं समाप्तम् ।

# श्रीगोपीगीतम् ।

लोकाभिराम जनभूषण विश्वदीप
कन्दर्पमोहनजगद्वृजिनार्तिहारिन् ।
आनन्दकन्द यदुनन्दन नन्दसूनो
स्वच्छन्दपद्ममकरन्द नमो नमस्ते ॥ १ ॥

गोविप्रसाधुविजयध्वज देववन्द्य
कंसादिदैत्यवधहेतुकृतावतार ।
श्रीनन्दराजकुलपद्मदिनेश देव
देवादिमुक्तजनदर्पण ते जयोऽस्तु ॥ २ ॥

गोपाल सिन्धुपरमौक्तिकरूपधारिन्
गोपालवंशगिरिनीलमणे परात्मन् ।
गोपालमण्डलसरोवरकञ्जमूर्ते
गोपालचन्दनवनेकलहंसमुख्य ॥ ३ ॥

श्रीराधिकावदनपंकजषट्पदस्त्वं
श्रीराधिकावदनचन्द्रचकोररूपः ।
श्रीराधिकाहृदयसुन्दरचन्द्रहारः
श्रीराधिकामधुलताकुसुमाकरोऽसि ॥ ४ ॥

यो रासरंगनिजवैभवभूरिलीलो
यो गोपिकानयनजीवनमूलरूपः ।
मानं चकार रहसि किल मानवत्याः
सोऽयं हरिर्भवतु नो नयनाग्रगामी ॥ ५ ॥

यो गोपिकासकलयूथमलञ्चकार
वृन्दावनं च निजपादरजोभिरेतत् ।

यः सर्वलोकविभवाय बभूव भूमौ
तं भूरिलीलमुरगेन्द्रभुजं भजामः ॥ ६ ॥

चन्द्रं प्रतप्तकिरणं ज्वलनं प्रसादं
सर्वं वनान्तमसिपत्रवनं परेश ।
बाणं प्रभञ्जनमतीव सुमन्दयानं
मन्यामहे किल भवन्तमृते व्यथार्ताः ॥ ७ ॥

इति श्रीगर्गसंहितायां—वृन्दावनखण्डे—श्रीकृष्णागमाय
श्रीगोपीगीतं समाप्तम् ।

## श्रीमुकुन्दमुक्तावली ।

नवजलधरवर्णं चम्पकोद्भासिकर्णं
विकसितनलिनास्यं विस्फुरन्मन्दहास्यम् ।
कनकरुचिदुकूलं चारुबर्हावचूलं
कमपि निखिलसारं नौमि गोपीकुमारम् ॥ १ ॥

मुखजितशरदिन्दुः केलिलावण्यसिन्धुः
करविनिहितकन्दुर्बल्लवीप्राणबन्धुः ।
वपुरुपसृतरेणुः कक्षनिःक्षिप्तवेणु-
र्वचनवशगधेनुः पातु मां नन्दसूनुः ॥ २ ॥

ध्वस्तदुष्टशंखचूड बल्लवीकुलोपगूढ
भक्तमानसाधिरूढ नीलकण्ठपिच्छचूड ।
कण्ठलम्बिमञ्जुगुञ्ज केलिलब्धरम्यकुञ्ज
कर्णवर्तिफुल्लकुन्द पाहि देव मां मुकुन्द ॥ ३ ॥

यज्ञभङ्गरुष्टशक्रनुन्नघोरमेघचक्र-
वृष्टिपूरखिन्नगोपवीक्षणोपजातकोप ।
क्षिप्तसव्यहस्तपद्मधारितोच्चशैलसद्म-
गुप्तगोष्ठ रक्ष रक्ष मां तथाद्य पङ्कजाक्ष ॥ ४ ॥

मुक्ताहारं दधदुडुचक्राकारं
सारं गोपीमनसि मनोजारोपी।
कोपी कंसे खलनिकुरम्बोत्तंसे
वंशे रङ्गी दिशतु रतिं नः शार्ङ्गी ॥ ५ ॥

लीलोद्दामा जलधरमालाश्यामा
क्षामाः कामादभिरचयन्ती रामाः ।
सा मामव्यादखिलमुनीनां स्तव्या
गव्यापूर्तिः प्रभुरघशत्रोमूर्तिः ॥ ६ ॥

पर्ववतुलशर्वरीपतिगर्वरीतिहराननं
नन्दनन्दनमिन्दिराकृतवन्दनं धृतचन्दनम् ।
सुन्दरीरतिमन्दिरीकृतकन्दरं धृतमन्दरं
कुण्डलद्युतिमण्डलप्लुतकन्धरं भज सुन्दरम् ॥ ७ ॥

गोकुलाङ्गनमङ्गलं कृतपूतनाभवमोचनं
कुन्दसुन्दरदन्तमम्बुजवृन्दवन्दितलोचनम् ।
सौरभाकरफुल्लपुष्करविस्फुरत्करपल्लवं
दैवतव्रजदुर्लभं भज बल्लवीकुलवल्लभम् ॥ ८ ॥

तुण्डकान्तिदण्डितोरुपाण्डुरांशुमण्डलं
गण्डपालिताण्डवालिशालिरत्नकुण्डलम् ।
फुल्लपुण्डरीकखण्डक्लृप्तमाल्यमण्डनं
चण्डबाहुदण्डमत्र नौमि कंसखण्डनम् ॥ ९ ॥

उत्तरङ्गदङ्गरागसङ्गमातिपिङ्गल-
स्तुङ्गशृङ्गसङ्गिपाणिरङ्गनातिमङ्गलः ।
दिग्विलासिमल्लिहासिकीर्तिवल्लिपल्लव-
स्त्वां स पातु फुल्लचारुचिल्लिरद्य बल्लवः ॥१०॥

इन्द्रनिवारं व्रजपतिवारं, निर्धुतवारं हृतघनवारम् ।
रक्षितगोत्रं प्रीणितगोत्रं, त्वां धृतगोत्रं नौमि सगोत्रम् ॥११॥

कंसमहीपतिहृद्गतशूलं, संततसेवितयामुनकूलम् ।
वन्दे सुन्दरचन्द्रकचूलं, त्वामहमखिलचराचरमूलम् ॥१२॥

मलयजरुचिरस्तनुजितमुदिरः, पालितविबुधस्तोषितवसुधः ।
मामतिरसिकः केलिभिरधिकः, सितसुभगरदः कृपयतु वरदः ॥१३॥

उररीकृतमुरलीरुतभङ्गं, नवजलधरकिरणोल्लसदङ्गम् ।
युवतिहृदयधृतमदनतरङ्गं, प्रणमत यामुनतटकृतरङ्गम् ॥१४॥

नवाम्भोदनीलं जगत्तोषिशीलं, मुखासङ्गिवंशं शिखण्डावतंसम् ।
करालम्बिवेत्रं वराम्भोजनेत्रं, धृतस्फीतगुञ्जं भजे लब्धकुञ्जम् ॥१५

हृतक्षोणिभारं कृतक्लेशहारं, जगद्गीतसारं महारत्नहारम् ।
मृदुश्यामकेशं लसद्वन्यवेशं, कृपाभिर्नदेशं भजे बल्लवेशम् ॥१६॥

उल्लसद्बल्लवीवाससां तस्कर-, स्तेजसा निर्जितप्रस्फुरद्भास्करः ।
पीनदोःस्तम्भयोरुल्लसच्चन्दनः, पातु वः सर्वतो देवकीनन्दनः ॥१७॥

संसृतेस्तारकं तं गवां चारकं,वेणुना मण्डितं क्रीडने पण्डितम् ।
धातुभिर्वेषिणं दानवद्वेषिणं, चिन्तय स्वामिनं बल्लवीकामिनम् ॥१८

उपात्तकवलं परागशबलं, मदेकशरणं सरोजचरणम् ।
अरिष्टदलनं विकृष्टललनं, नमामि समहं सदैव तमहम् ॥१९॥

विहारसदनं मनोज्ञरदनं, प्रणीतमदनं शशाङ्कवदनम् ।
उरस्थकमलं यशोभिरमलं, करात्तकमलं भजस्व तमलम् ॥२०॥

दुष्टध्वंसः कर्णिकारावतंसः, खेलद्वंशीपञ्चमध्वानशंसी ।
गोपीचेतःकेलिभङ्गीनिकेतः, पातु स्वैरी हन्त वः कंसवैरी ॥२१॥

वृन्दाटव्यां केलिमानन्दनव्यां, कुर्वन्नारीचित्तकन्दर्पधारी ।
नर्मोद्गारी मां दुकूलापहारी, नीपारूढः पातु बर्हावचूडः ॥२२॥

रुचिरनखे रचय सखे, वलितरतिं भजनततिम् ।
त्वमविरतिस्त्वरितगति-, र्नतशरणे हरिचरणे ॥ २३ ॥

रुचिरपटः पुलिनतटः, पशुपपतिर्गुणवसतिः ।
स मम शुचिर्जलदरुचि-, र्मनसि परिस्फुरतु हरिः ॥२४॥

केलिविहितयमलार्जुनभञ्जन, सुललितचरितनिखिलजनरञ्जन ।
लोचननर्तनजितचलखञ्जन, मां परिपालय कालियगञ्जन ॥२५॥

भुवनविसृत्वरमहिमाडम्बर, विरचितनिखिलखलोत्करसम्बर ।
वितर यशोदातनय वरं वर-, मभिलषितं मे धृतपीताम्बर ॥२६॥

चिकुरकरम्बितचारुशिखण्डं, भालविनिर्जितवरशशिखण्डम् ।
रदरुचिनिर्धुतमुद्रितकुन्दं, कुरुत बुधा हृदि सपदि मुकुन्दम् ॥२७॥

यः परिरक्षितसुरभीलक्ष-, स्तदपि च सुरभीमर्दनदक्षः ।
मुरलीवादनखुरलीशाली, स दिशतु कुशलं तव वनमाली ॥२८॥

रमितनिखिलडिम्भे वेणुपीतोष्ठबिम्बे
हतखलनिकुरम्बे बल्लवीदत्तचुम्बे ।
भवतु महितनन्दे तत्र वः केलिकन्दे
जगदविरलतुन्दे भक्तिरुर्वी मुकुन्दे ॥ २९ ॥

पशुपयुवतिगोष्ठीचुम्बितश्रीमदोष्ठी
स्मरतरलितदृष्टिर्निर्मितानन्दवृष्टिः ।
नवजलधरधामा पातु वः कृष्णनामा
भुवनमधुरवेषा मालिनी मूर्तिरेषा ॥ ३० ॥

इति श्रीमद्रूपगोस्वामि-विरचित-स्तवमालायां
श्रीमुकुन्दमुक्तावली समाप्ता ।

## श्रीकृष्णकर्णामृतम् ।

चिन्तामणिर्जयति सोमगिरिर्गुरुर्मे
शिक्षागुरुश्च भगवाञ्छिखिपिच्छमौलिः ।
यत्पादकल्पतरुपल्लवशेखरेषु
लीलास्वयंवररसं लभते जयश्रीः ॥ १ ॥

अस्ति स्वस्तरुणीकराग्रविगलत्कल्पप्रसूनाप्लुतं
वस्तु प्रस्तुतवेणुनादलहरीनिर्वाणनिर्व्याकुलम् ।
स्रस्तस्रस्तनिरुद्धनीविविलसद्गोपीसहस्रावृतं
हस्तन्यस्तनतापवर्गमखिलोदारं किशोराकृति ॥ २ ॥

चातुर्यैकनिदानसीमचपलापाङ्गच्छटामन्थरं
लावण्यामृतवीचिलोलितदृशं लक्ष्मीकटाक्षादृतम् ।
कालिन्दीपुलिनाङ्गनप्रणयिनं कामावतारांकुरं
बालं नीलममी वयं मधुरिमस्वाराज्यमाराध्नुमः ॥ ३ ॥

बर्होत्तंसविलासकुन्तलभरं माधुर्यमग्नाननं
प्रोन्मीलन्नवयौवनं प्रविलसद्वेणुप्रणादामृतम् ।
आपीनस्तनकुड्मलाभिरभितो गोपीभिराराधितं
ज्योतिश्चेतसि नश्चकास्तु जगतामेकाभिरामाद्भुतम् ॥४॥

मधुरतरस्मितामृतविमुग्धमुखाम्बुरुहं
मदशिखिपिच्छलाञ्छितमनोज्ञकचप्रचयम् ।
विषयविषामिषग्रसनगृध्नुनि चेतसि मे
विपुलविलोचनं किमपि धाम चकास्तु चिरम् ॥ ५ ॥

मुकुलायमाननयनाम्बुजं विभो-, मुरलीनिनादमकरन्दनिर्भरम् ।
मुकुरायमाणमृदुगण्डमण्डलं, मुखपङ्कजं मनसि मे विजृम्भताम् ॥६

कमनीयकिशोरमुग्धमूर्तेः, कलवेणुक्वणितादृताननेन्दोः ।
मम वाचि विजृम्भतां मुरारे-,र्मधुरिम्णः कणिकापि कापि कापि ॥७

मदशिखण्डिशिखण्डविभूषणं, मदनमन्थरमुग्धमुखाम्बुजम् ।
व्रजवधूनयनाञ्जनरञ्जितं, विजयतां मम वाङ्मयजीवितम् ॥ ८ ॥

पल्लवारुणपाणिपङ्कजसङ्गिवेणुरवाकुलं
फुल्लपाटलपाटलीपरिवादिपादसरोरुहम् ।
उल्लसन्मधुराधरद्युतिमञ्जरीसरसाननं
बल्लवीकुचकुंभकुंकुमपंकिलं प्रभुमाश्रये ॥ ९ ॥

अपाङ्गरेखाभिरभंगुराभि-, रनङ्गरेखारसरञ्जिताभिः ।
अनुक्षणं बल्लवसुन्दरीभि-, रभ्यस्यमानं विभुमाश्रयामः ॥ १० ॥

हृदये मम हृद्यविभ्रमाणां, हृदयं हर्षविशाललोलनेत्रम् ।
तरुणं व्रजबालसुन्दरीणां, तरलं किंचन धाम संनिधत्ताम् ॥ ११ ॥

निखिलभुवनलक्ष्मीनित्यलीलास्पदाभ्यां
कमलविपिनवीथीगर्वसर्वंकषाभ्याम् ।
प्रणमदभयदानप्रौढिगाढादृताभ्यां
किमपि वहतु चेतः कृष्णपादाम्बुजाभ्याम् ॥ १२ ॥

प्रणयपरिणताभ्यां श्रीभरालम्बनाभ्यां
प्रतिपदललिताभ्यां प्रत्यहं नूतनाभ्याम् ।
प्रतिमुहुरधिकाभ्यां प्रस्फुरल्लोचनाभ्यां
प्रवहतु हृदये नः प्राणनाथः किशोरः ॥ १३ ॥

माधुर्यवारिधिमदाम्बुतरङ्गभङ्गी-
शृङ्गारसंकुलितशीतकिशोरवेषम् ।
आमन्दहासललिताननचन्द्रबिम्ब-
मानन्दसंप्लवमनु प्लवतां मनो मे ॥ १४ ॥

अव्याजमंजुलमुखाम्बुजमुग्धभावै-
रास्वाद्यमाननिजवेणुविनोदनादम् ।
आक्रीडतामरुणपादसरोरुहाभ्या-
मार्द्रे मदीयहृदये भुवनार्द्रमोजः ॥ १५ ॥

मणिनूपुरवाचालं वन्दे तच्चरणं विभोः ।
ललितानि यदीयानि लक्ष्माणि व्रजवीथिषु ॥ १६ ॥

मम चेतसि स्फुरतु बल्लवीविभो-,र्मणिनूपुरप्रणयि मञ्जु शिञ्जितम् ।
कमलावनेचरकलिन्दकन्यका-, कलहंसकण्ठकलकूजिताद्दतम् ॥ १७

तरुणारुणकरुणामयविपुलायतनयनं
कमलाकुचकलशीभरविपुलीकृतपुलकम् ।
मुरलीरवतरलीकृतमुनिमानसनलिनं
मम खेलतु मदचेतसि मधुराधरममृतम् ॥ १८ ॥

आमुग्धमर्धनयनाम्बुजचुम्ब्यमान-
हर्षाकुलव्रजवधूमधुराननेन्दोः ।
आरब्धवेणुरवमात्तकिशोरमूर्ते-
राविर्भवन्तु मम चेतसि केऽपि भावाः ॥ १९ ॥

कलक्वणितकङ्कणं करनिरुद्धपीताम्बरं
क्लमप्रसृतकुन्तलं गलितबर्हभूषं विभोः ।
पुनः प्रकृतिचापलं प्रणयिनीभुजायन्त्रितं
मम स्फुरतु मानसे मदनकेलिशय्योत्थितम् ॥ २० ॥

स्तोकस्तोकनिरुध्यमानमृदुलप्रस्यन्दिमन्दस्मितं
प्रेमोद्भेदनिरर्गलप्रसृमरप्रव्यक्तरोमोद्गमम् ।
श्रोतुं श्रोत्रमनोहरं व्रजवधूलीलामिथोजल्पितं
मिथ्यास्वापमुपास्महे भगवतः क्रीडानिमीलद्दृशः ॥२१॥

विचित्रपत्रांकुरशालि बाला-, स्तनान्तरं याम वनान्तरं वा ।
अपास्य वृन्दावनपादलास्य-, मुपास्यमन्यं न विलोकयाम ॥२२॥

सार्धं समृद्धैरमृतायमानै-, रातायमानैर्मुरलीनिनादैः ।
मूर्धाभिषिक्तं मधुराकृतीनां, बालं कदा नाम विलोकयिष्ये ॥२३॥

शिशिरीकुरुते कदा नु नः, शिखिपिच्छाभरणः शिशुर्दृशोः ।
युगलं विगलन्मधुद्रव-, स्मितमुद्रामृदुना मुखेन्दुना ॥ २४ ॥

कारुण्यकर्बुरकटाक्षनिरीक्षणेन, तारुण्यसंवलितशैशववैभवेन ।
आपुष्णता भुवनमद्भुतविभ्रमेण,श्रीकृष्णचन्द्र शिशिरीकुरु लोचनं मे ॥

कदा वा कालिन्दीकुवलयदलश्यामलतराः
कटाक्षा लक्ष्यन्ते किमपि करुणावीचिनिचिताः ।
कदा वा कन्दर्पप्रतिभटजटाचन्द्रशिशिराः
कमप्यन्तस्तोषं दधति मुरलीकेलिनिनदाः ॥ २६ ॥

अधीरमालोकितमार्द्रजल्पितं, गतं च गंभीरविलासमन्थरम् ।
अमन्दमालिङ्गितमाकुलोन्मद-, स्मितं च ते नाथ विदन्ति गोपिकाः ॥

अस्तोकस्मितभरमायतायताक्षं
निःशेषस्तनमृदितं व्रजाङ्गनाभिः ।
निःसीमस्तवकितनीलकान्तिधारं
दृश्यासं त्रिभुवनसुन्दरं महस्ते ॥ २८ ॥

मयि प्रसादं मधुरैः कटाक्षै-, र्वंशीनिनादानुचरैर्विधेहि ।
त्वयि प्रसन्ने किमिहापरैर्न-, स्त्वय्यप्रसन्ने किमिहापरैर्नः ॥ २९ ॥

निबद्धमूर्धाञ्जलिरेष याचे, नीरन्ध्रदैन्योन्नतिमुक्तकण्ठम् ।
दयाम्बुधे देव भवत्कटाक्ष-, दाक्षिण्यलेशेन सकृन्निषिञ्च ॥ ३० ॥

पिच्छावतंसरचनोचितकेशपाशे
पीनस्तनीनयनपङ्कजपूजनीये ।
चन्द्रारविन्दविजयोद्यतवक्त्रबिम्बे
चापल्यमेति नयनं तव शैशवे नः ॥ ३१ ॥

त्वच्छैशवं त्रिभुवनाद्भुतमित्यवेहि
मच्चापलं च मम वा तव वाधिगम्यम् ।
तत् किं करोमि विरलं मुरलीविलासि
मुग्धं मुखाम्बुजमुदीक्षितुमीक्षणाभ्याम् ॥ ३२ ॥

पर्याचितामृतरसानि पदार्थभङ्गी-
वल्गूनि वल्गितविशालविलोचनानि ।
बाल्याधिकानि मदवल्लवभाविनीभि-
र्भावे लुठन्ति सुकृतां तव जल्पितानि ॥ ३३ ॥

पुनः प्रसन्नेन्दुमुखेन तेजसा, पुरोऽवतीर्णस्य कृपामहाम्बुधेः ।
तदेव लीलामुरलीरवामृतं, समाधिविघ्नाय कदा नु मे भवेत् ॥३४॥

बालेन मुग्धचपलेन विलोकितेन
　मन्मानसे किमपि चापलमुद्वहन्तम् ।
लोलेन लोचनरसायनमीक्षणेन
　लीलाकिशोरमुपगूहितुमुत्सुकाः स्मः ॥ ३५

अधीरबिम्बाधरविभ्रमेण, हर्षार्द्रवेणुस्वरसंपदा च ।
अनेन केनापि मनोहरेण, हा हन्त हा हन्त मनो दुनोषि ॥ ३६ ॥

यावन्न मे निखिलमर्मदृढाभिघातं
　निःसंधिबन्धनमुपैति न कोऽपि तापः ।
तावद्विभो भवतु तावकवक्त्रचन्द्र-
　चन्द्रातपद्विगुणिता मम चित्तधारा ॥ ३७ ॥

यावन्न मे नरदशा दशमी कुतोऽपि
　रन्ध्रादुपैति तिमिरीकृतसर्वभावा ।
लावण्यकेलिसदनं तव तावदेव
　लक्ष्यासमुत्क्वणितवेणु मुखेन्दुबिम्बम् ॥ ३८ ॥

आलोललोचनविलोकितकेलिधारा-
　नीराजिताग्रचरणैः करुणाम्बुराशेः ।
आर्द्राणि वेणुनिनदैः प्रतिनादपूरै-
　राकर्णयामि मणिनूपुरशिञ्जितानि ॥ ३९ ॥

हे देव हे दयित हे भुवनैकबन्धो
　हे कृष्ण हे चपल हे करुणैकसिन्धो ।
हे नाथ हे रमण हे नयनाभिराम
　हा हा कदा नु भवितासि पदं दृशोर्मे ॥ ४० ॥

अमून्यधन्यानि दिनान्तराणि, हरे त्वदालोकनमन्तरेण ।
अनाथबन्धो करुणैकसिन्धो, हा हन्त हा हन्त कथं नयामि ॥ ४१ ॥

किमिह कृणुमः कस्य ब्रूमः कृतं कृतमाशया
कथयत कथामन्यां धन्यामहो हृदयेशयः ।
मधुरमधुरस्मेराकारे मनोनयनोत्सवे
कृपणकृपणा कृष्णे तृष्णा चिरं बत लम्बते ॥ ४२ ॥

आभ्यां विलोचनाभ्यामम्बुरुहविलोचनं बालम् ।
द्वाभ्यामपि परिरब्धुं दूरे मम हन्त दैवसामग्री ॥ ४३ ॥

अश्रान्तस्मितमरुणारुणाधरोष्ठं, हर्षार्द्रद्विगुणमनोज्ञवेणुगीतम् ।
विभ्राम्यद्विपुलविलोचनार्धमुग्धं,वीक्षिष्ये तव वदनाम्बुजं कदा नु ॥

लीलायताभ्यां रसशीतलाभ्यां, नीलारुणाभ्यां नयनाम्बुजाभ्याम् ।
आलोकयेदद्भुतविभ्रमाभ्यां, काले कदा कारुणिकः किशोरः ॥ ४५ ॥

बहलचिकुरभारं बद्धपिच्छावतंसं
चपलचपलनेत्रं चारुबिम्बाधरोष्ठम् ।
मधुरमृदुलहासं मन्दरोदारलीलं
मृगयति नयनं मे मुग्धवेषं मुरारेः ॥ ४६ ॥

बहलजलदच्छायाचौरं विलासभरालसं
मदशिखिशिखालीलोत्तंसं मनोज्ञमुखाम्बुजम् ।
कमपि कमलापाङ्गोदग्रप्रसङ्गजडं जग-
न्मधुरिमपरीपाकोद्रेकं वयं मृगयामहे ॥ ४७ ॥

परामृश्यं दूरे पथि पथि मुनीनां व्रजवधू-
दृशा दृश्यं शश्वत् त्रिभुवनमनोहारिवदनम् ।
अनामृश्यं वाचामनिशमुदयानामपि कदा
द[illegible]दृश्ये देवं दरदलितनीलोत्पलरुचिम् ॥ ४८ ॥

लीलाननाम्बुजमधीरमुदीक्षमाणं
नर्माणि वेणुविवरेषु निवेशयन्तम् ।
दोलायमाननयनं नयनाभिरामं
देवं कदा नु दयितं व्यतिलोकयिष्ये ॥ ४९ ॥

लग्नं मुहुर्मनसि लंपटसंप्रदाय-
लेखावलेहिनि रसज्ञमनोज्ञवेषम् ।
रज्यन्मृदुस्मितमृदूल्लसिताधरांशु-
राकेन्दुलालितमुखेन्दु मुकुन्दबाल्यम् ॥ ५० ॥

अहिमकरकरनिकरमृदुमुदितलक्ष्मी-
सरसतरसरसिरुहसदृशदृशि देवे ।
व्रजयुवतिरतिकलहविजयिनिजलीला-
मदमुदितवदनशशिमधुरिमणि लीये ॥ ५१ ॥

करकमलदलकलितललिततरवंशी-
कलनिनदगलदमृतघनसरसि देवे ।
सहजरसभरभरितदरहसितवीथी-
सततवहदधरमणिमधुरिमणि लीये ॥ ५२ ॥

कुसुमशरशरसमरकुपितमदगोपी-
कुचकलसघुसृणरसलसदुरसि देवे ।
मदमुदितमृदुहसितमुषितशशिशोभा-
मुहुरधिकमुखकमलमधुरिमणि लीये ॥ ५३ ॥

आनम्रामसितभ्रुवोरुपचितामक्षीणपक्ष्मांकुरे-
ष्वालोलामनुरागिणोर्नयनयोरार्द्रां मृदौ जल्पिते ।
आताम्रामधरामृते मदकलामम्लानवंशीस्वने-
ष्वाशास्ते मम लोचनं व्रजशिशोर्मूर्तिं जगन्मोहिनीम् ॥

दातुं शक्नोति मेऽजस्रं प्रेमस्मरणकीर्तनम् ।
तव प्रेमकटाक्षं च मयि प्रापयितुं क्षमः ॥४२८॥
गोगोपगोपिकासक्तं त्वां च दर्शयितुं प्रभुः ।
एवं यो मम हीनस्य सर्वाशालम्बनं परम् ॥४२९॥
महाकारुण्यमहिमा पुराणो नित्यनूतनः ।
त्वदीयः सच्चिदानन्दस्तस्मै नित्यं नमो नमः ॥४३०॥

फलश्रुतिः ।

एतल्लीलास्तवं नाम स्तोत्रं श्रीकृष्ण ! तारकम् ।
प्रणामाष्टोत्तरशते योऽर्थावगमपूर्वकम् ॥४३१॥
कीर्तयेत् सोऽचिराद् भक्तो लभतां कृपया तव ।
रूपे नामनि लीलायामाक्रीडेऽपि परां रतिम् ॥४३२॥नमः१०८॥

इति श्रीमत्सनातनगोस्वामिविरचितं
श्रीकृष्णलीलास्तवः समाप्तः ।

# श्रीगोविन्दबिरुदावली ।

इयं मङ्गलरूपा स्याद्गोविन्दबिरुदावली ।
यस्याः पठनमात्रेण श्रीगोविन्दः प्रसीदति ॥ १ ॥

ब्रह्मा ब्रह्माण्डभाण्डे सरसिजनयन स्रष्टुमाक्रीडनानि
स्थाणुर्भंक्तुं च खेलाखुरलितमतिना तानि येन न्ययोजि ।
तादृक्क्रीडाण्डकोटीवृतजलकुडवा यस्य वैकुण्ठकुल्या
कर्तव्या तस्य का ते स्तुतिरिह कृतिभिः प्रोज्झ्य लीलायितानि ?२

निबिडतरतुराषाहन्तरीणोष्मसंप–
द्विघटनपटुखेलाडम्बरोर्मिच्छटस्य ।

सगरिमगिरिराजच्छत्रदण्डायितश्री-
र्जगदिदमघशत्रोः सव्यबाहुर्धिनोतु ॥ ३ ॥

चण्डवृत्तायाः कलिकाख्याया नखे वर्धितम् ।

१। अभ्रमुपतिमदमर्दिपदक्रम विभ्रमपरिमललुप्तसुहृच्छ्रम ।
दुष्टदनुजबलदर्पविमर्दन तुष्टहृदयसुरपक्षविवर्धन ।
दर्पकविलसितसर्गनिरर्गल सर्पतुलितभुज कर्णगकुण्डल ।
निर्मलमलयजचर्चितविग्रह नर्मललितकृतसर्पविनिग्रह ।
दुष्करकृतिभरलक्षणविस्मितपुष्करभवभयमर्दनसुस्मित ।
वत्सलहलधरतर्कितलक्षण वत्सरविरहितवत्ससुहृद्गण ।
गर्जितविजयिविशुद्धतरस्वर तर्जितखलगणदुर्जनमत्सर ॥वीर॥

तव मुरलीध्वनिरमरीकामाम्बुधिवृद्धिशुभ्रांशुः ।
अचटुलगोकुलकुलजाधैर्याम्बुधिपानकुम्भजो जयति ॥ ४ ॥

२। धृतगोवर्धन सुरभीवर्धन पशुपालप्रिय रचितोपक्रिय ॥धीर॥

भुजङ्गरिपुचन्द्रकस्फुरदखण्डचूडांकुरे
निरंकुशदृगञ्चलभ्रमिनिबद्धभृङ्गभ्रमे ।
पतङ्गदुहितुस्तटीवनकुटीरकेलिप्रिये
परिस्फुरतु मे मुहुस्त्वयि मुकुन्द शुद्धा रतिः ॥ ५ ॥

वीरभद्रः ।

३। उद्यद्विद्युद्द्युतिपरिचितपट सर्पत्सर्पस्फुरदुरुभुजतट ।
स्वस्थस्वस्थत्रिदशयुवतिनुत रक्षद्दक्षप्रियसुहृदनुसृत ।
मुग्धस्निग्धव्रजजनकृतसुख नव्यश्रव्यस्वरविलसितमुख ।
हस्तन्यस्तस्फुटसरसिजवर सर्जद्गर्जत्खलवृषमदहर ।
युद्धक्रुद्धप्रतिभटलयकर वर्णस्वर्णप्रतिमतिलकधर ।
रुष्यत्तुष्यद्युवतिषु कृतरस भक्तव्यक्तप्रणयमनसि वस ॥वीर॥

प्रचुरपरमहंसैः काममाचम्यमाने
प्रणतमकरचक्रैः शश्वदाक्रान्तकुक्षौ।
अघहर जगदण्डाहिण्डिहिन्दोलहासे
स्फुरतु तव गभीरे केलिसिन्धौ रतिर्नः ॥ ६ ॥

४। उद्गीर्णतारुण्य विस्तीर्णकारुण्य
गुञ्जालतापिञ्छपुञ्जाढ्यतापिञ्छ ॥ धीर ॥

उचितः पशुपत्यलंक्रियायै, नितरां नन्दितरोहिणीयशोदः।
तव गोकुलकेलिसिन्धुजन्मा, जगदुद्दीपयति स्म कीर्तिचन्द्रः ॥ ७ ॥

समग्रः।

५। अरिष्टखण्डन स्वभक्तमण्डन प्रयुक्तचन्दन प्रपन्ननन्दन।
प्रसन्नचञ्चल स्फुरद्दृगञ्चल श्रुतिप्रलम्बकभ्रमत्कदम्बक।
प्रकृष्टकन्दरप्रविष्ट सुन्दरस्थविष्ठसिन्धुरप्रसर्पबन्धुर ॥ देव ॥

वृन्दारकतरुवीते वृन्दावनमण्डले वीर।
नन्दितबान्धववृन्द सुन्दर वृन्दारिका रमय ॥ ८ ॥

६। खलिनीडुम्बक मुरलीचुम्बक जननीवन्दकपशुपीनन्दक ॥वीर॥

अनुदिनमनुरक्तः पद्मिनीचक्रवाले
नवपरिमलमाद्यच्चञ्चरीकानुकर्षी।
कलितमधुरपद्मः कोऽपि गम्भीरवेदी
जयति मिहिरकन्याकूलवन्याकरीन्द्रः ॥ ९ ॥

अच्युतः।

७। जय जय वीर स्मररसधीर द्विजजितहीर प्रतिभटवीर।
स्फुरदुरुहारप्रियपरिवारच्छुरितविहार स्थिरमणिहार।

प्रकटितरास स्तबकितहास स्फुटपटवासस्फुरितविलास ।
ध्वनदलिजालस्तुतवनमाल व्रजकुलपाल प्रणयविशाल ।
प्रविलसदंसभ्रमदवतंस क्वणदुरुवंशस्वनहृतहंस ।
प्रशमितदाव प्रणयिषु तावद्विलसितभाव स्तनितविराव ।
स्तनघनरागश्रितपरभाग क्षतहरियाग त्वरितधृताग ॥वीर॥

स्थितिनियतिमतीते धीरताहारिगीते
प्रियजनपरिवीते कुंकुमालेपपीते ।
कलितनवकुटीरे कांच्युदञ्चत्कटीरे
स्फुरतु रसगभीरे गोष्ठवीरे रतिर्नः ॥ १० ॥

८। अम्बाविनिहितचुम्बामलतरबिम्बाधरमुखलम्बालक जय॥देव॥

दृष्ट्वा ते पदनखकोटिकान्तिपूरं
पूर्णानामपि शशिनां शतैर्दुरापम् ।
निर्विण्णो मुरहर मुक्तरूपदर्पः
कन्दर्पः स्फुटमशरीरतामयासीत् ॥ ११ ॥

उत्पलम् ।

९। नर्तितशार्करचक्रतकर्करवृद्धमरुद्धरतर्दन निर्भर- ।
दुष्टविमर्दन शिष्टविवर्धन सर्वविलक्षण मित्रकृतक्षण ।
सद्धुजलक्षितपर्वतरक्षितनिष्ठुरगर्जनखिन्नसुहृज्जन ।
रुष्टदिवस्पतिगर्वसमुन्नतितर्जनविभ्रम निर्गलितभ्रम- ।
शक्रकृतस्तव विस्फुरदुत्सव ॥ वीर ॥

बुद्धीनां परिमोहनः किल ह्रियामुच्चाटनः स्तम्भनो
धर्मोदग्रभियां मनःकरटिनां वश्यत्वनिष्पादनः ।
कालिन्दीकलहंस हन्त वपुषामाकर्षणः सुभ्रुवां
जीयाद्वैणवपञ्चमध्वनिमयो मन्त्राधिराजस्तव ॥ १२ ॥

१०। काननारब्धकाकलीशब्दपाटवाकृष्टगोपिकादृष्ट ।
चातुरीजुष्टराधिकातुष्ट कामिनीलक्षमोदने दक्ष ।
भाविनीपक्ष माममुं रक्ष ॥ देव ॥

अजर्जरपतिव्रताहृदयवज्रभेदोद्धुराः
कठोरवरवर्णिनीनिकरमानवर्मच्छिदः ।
अनङ्गधनुरुद्धतप्रचलचिल्लिचापच्युताः
क्रियासुरघविद्विषस्तव मुदं कटाक्षेषवः ॥ १३ ॥

तुरङ्गः ।

११। संचलविचकिलकुण्डल मण्डितवरतनुमण्डल ।
कुण्डलिपतिकृतसंगर खण्डितभुवनभयंकर ।
शंकरकमलजवन्दित किंकरनुतिलवनन्दित ।
गञ्जितसमदपुरंदर चञ्चलदमनधुरंधर ।
बन्धुरगतिजितसिन्धुर चन्दनसुरभितकन्धर ।
सुन्दरभुजलसदङ्गद सङ्गदसखिगणरङ्गद ।
झंकृतिकरमणिकङ्कण कुन्तललुठदुरुरङ्गण ।
कुंकुमरुचिलसदम्बर लङ्घिमपरिमलडम्बर ।
नन्दभवनवरमङ्गल मंजुलघुसृणसुपिङ्गल ।
हिंगुलरुचिपदपङ्कज संचितयुवतिसदङ्गज ।
संततमृगमदपङ्किल संतनु मयि कुशलं किल ॥ वीर ॥

गिरितटीकुनटीकुलपिङ्गले, खलतृणावलिसंज्वलदिङ्गले ।
प्रखरसंगरसिन्धुतिमिङ्गिले, मम रतिर्वलतां व्रजमङ्गले ॥१४॥

१२। जय चारुदामललनाभिराम जगतीललाम रुचिहृतवाम॥वीर॥

उन्दितहृदयेन्दुमणिः पूर्णकलः कुवलयोल्लासी ।
परितः शार्वरमथनो विलसति वृन्दाटवीचन्द्रः ॥ १५ ॥

गुणरतिः ।

१३। प्रकटीकृतगुण शकटीविघटन निकटीकृतनवलकुटीवर वन-
पटलीतटचर नटलील मधुर सुरभीकृतवन सुरभीहितकर
मुरलीविलसितखुरलीहृतजगदरुणाधर नवतरुणायतभुज
वरुणालयसमकरुणापरिमल कलभायितबलशलभायितखल
धवलाधृतिहरगवलाश्रितकर सरसीरुहधर सरसीकृतनर
कलशीदधिहर कलशीलितमुख ललितारतिकर ललितावलिपर
॥ धीर ॥

हरिणीनयनावृत प्रभो करिणीवल्लभकेलिविभ्रम ।
तुलसीप्रिय दानवाङ्गनाकुलसीमन्तहर प्रसीद मे ॥ १६ ॥

१४। चन्दनचर्चित गन्धसमर्चित गण्डविवर्तनकुण्डलनर्तन
संदलदुज्ज्वलकुन्दलसद्गल वंजुलकुड्मलमंजुल कज्जल-
सुन्दरविग्रह नन्दलसद्ग्रह ॥ वीर ॥

रतिमनुवध्य गृहेभ्यः, कर्षति राधां वनाय या निपुणा ।
सा जयति निसृष्टार्था, तव वरवंशजकाकली दूती ॥ १७ ॥

मातङ्गखेलितम् ।

१५। नाथ हे नन्दगेहिनीशंद पूतनापिण्डपातने चण्ड
दानवे दण्डकारकाखण्डसारपौगण्डलीलयोद्दण्ड
गोकुलालिन्दगूढ गोविन्द पूरितामन्दराधिकानन्द
वेतसीकुञ्जमाधवीपुञ्जलोकनारम्भजातसंरम्भ-
दीपितानङ्गकेलिभागङ्ग गोपसारङ्गलोचनारङ्ग-
कारिमातङ्गखेलितासङ्गसौहृदाशङ्कयोषितामङ्क-
पालिकालम्ब चारुरोलम्बमालिकाकण्ठ कौतुकाकुण्ठ

पाटलीकुन्दमाधवीवृन्दसेवितोत्तुङ्गशेखरोत्सङ्ग
मां सदा हन्त पालयानन्त ॥ वीर ॥

स्फुरदिन्दीवरसुन्दर सान्द्रतरानन्दकन्दलीकन्द ।
मां तव पदारविन्दे नन्दय गन्धेन गोविन्द ॥ १८ ॥

१६। कुन्ददशन बद्धरसन रुक्मवसन रम्यहसन ॥ देव ॥

प्रपन्नजनतातमःक्षपणशारदेन्दुप्रभा-
व्रजाम्बुजविलोचना–स्मरसमृद्धिसिद्धौषधिः ।
विडम्बितसुधाम्बुधिप्रबलमाधुरीडम्बरा
बिभर्तु तव माधव स्मितकडम्बकान्तिर्मुदम् ॥ १९ ॥

तिलकम् ।

१७। अमलकमलरुचिखण्डनपटुपद नटनपटिमहृतकुण्डलिपतिमद ।
नवकुवलयकुलसुन्दररुचिभर घनतडिदुपमितबन्धुरपटधर ।
तरणिदुहितृतटमंजुलनटवर नयननटनजितखञ्जनपरिकर ।
भुजतटगतहरिचन्दनपरिमल पशुपयुवतिगणनन्दनवरकल ।
नवमदमधुरदृगञ्चलविलसित मुखपरिमलभरसंचलदलिवृत ।
शरदुपचितशशिमण्डलवरमुख कनकमकरमयकुण्डलकृतसुख ।
युवतिहृदयशुकपञ्जरनिजभुज परिहितविचकिलमंजुलशिरसिज ।
सुतनुवदनविधुचुम्बनपटुतर दनुजनिबिडमदडुम्बनरणखर ॥
॥ वीर ॥

रणति हरे तव वेणौ नार्यो दनुजाश्च कम्पिताः खिन्नाः ।
वनमनपेक्षितदयिताः करवालान्प्रोज्झ्य धावन्ति ॥ २० ॥

१८। कुंकुमपुण्ड्रक गुम्फितपुण्ड्रक संकुलकङ्कण कण्ठगरङ्गण ॥देव॥

सारङ्गाक्षीलोचनभृङ्गावलिपानचारुभृङ्गार ।
त्वां मङ्गलशृङ्गारं शृङ्गाराधीश्वर स्तौमि ॥ २१ ॥

चण्डवृत्तस्य विशिखे पंकेरुहम् ।

१९। जय गतशङ्क प्रणयविटङ्क प्रियजनवङ्क स्मितजितशंख
स्फुटतरशृङ्गध्वनिधृतरङ्ग क्षणनटदङ्ग प्रणयिकुरङ्ग-
व्रजकृतसङ्ग श्रुतितटरिङ्गन्मधुरसपिङ्गग्रथितलवङ्ग
स्वनटनभङ्गत्रणितभुजङ्ग स्तबकिततुङ्गक्षितिरुहशृङ्ग-
स्थितबहुभृङ्गक्वणिततरङ्गप्रबलदनङ्ग भ्रमदुरुभृङ्गी-
मुदितकुरङ्गीदृगुदितभङ्गीमृदिमभिरङ्गीकृतनवसंगी-
तक दरवङ्केक्षण नवसंकेतगसुहृदङ्केशय सकलङ्के-
तरपृषदङ्केडितमुख पंकेरुहपद रंके कृपय सपंके किल मयि
॥ वीर ॥

उत्तुङ्गोदयशृङ्गसंगमजुषां बिभ्रत्पतङ्गत्विषां
वासस्तुल्यमनङ्गसंगरकलाशौटीर्यपारंगतः ।
स्वान्तं रिङ्गदपाङ्गभङ्गिभिरलं गोपाङ्गनानां गिल-
न्भूयास्त्वं पशुपालपुंगव दृशोरव्यङ्गरङ्गाय मे ॥२२॥

२०। विलसदलिकगतकुंकुमपरिमल कटितटधृतमणिकिङ्किणिवरकल ।
नवजलधरकुललङ्घिमरुचिभर मसृणमुरलिकलभङ्गिमधुरतर॥वीर॥

अवतंसितमंजुमञ्जरे तरुणीनेत्रचकोरपञ्जरे ।
नवकुंकुमपुञ्जपिञ्जरे रतिरास्तां मम गोपकुञ्जरे ॥२३॥

सितकंजम् ।

२१। जय कचचञ्चद्द्युतिसमुदञ्चन्मधुरिमपञ्चस्तबकितपिञ्छ-
स्फुरित विरिञ्चस्तुत गिरिकुञ्जव्रजपरिगुञ्जन्मधुकरपुञ्ज-
द्रुतमृदुशिञ्ज द्विपदहिगञ्ज व्रततिषु खञ्जन्नवरसमञ्ज-
न्मरुदतिपिञ्ज प्रवलितमुञ्जानलहर गुञ्जाप्रिय गिरिकुञ्जा-
श्रित रतिसंजागर नवकञ्जामलकर झञ्झानिलहर मञ्जी-

रजरवपङ्गोपरिमलसंजीवितनवपञ्चाशुगशरसंचा-
रणजितपञ्चाननमद ॥ धीर ॥

कर्णिकारकृतकर्णिकाद्युतिकर्णिकापदनियुक्तगैरिका ।
मेचका मनसि मे चकास्तु ते मेचकाभरण भारिणी तनुः ॥२४॥

२२। मदनरसंगत संगतपरिमल भुजतटरङ्गतरङ्गितजितबल
युवतिविलम्बित लम्बितकचभर कुसुमविटङ्कित टङ्कितगिरिवर ॥वीर

भ्रूमण्डलताण्डवितप्रसूनकोदण्डचित्रकोदण्ड ।
हृत्पुण्डरीकगर्भं मण्डय मम पुण्डरीकाक्ष ॥ २५ ॥

पाण्डूत्पलम् ।

२३। जय जय दण्डप्रिय कचखण्डग्रथितशिखण्डव्रज शशिखण्ड-
स्फुरणसपिण्डस्मितवृतगण्ड प्रणयकरण्ड द्विजपतितुण्ड
स्मररसकुण्ड क्षतफणिमुण्ड प्रकटपिचण्डस्थितजगदण्ड
कणदणुघण्ट स्फुटरणघण्ट स्फुरदुरुशुण्डाकृतिभुजदण्डा-
हतखलचण्डासुरगण पण्डाजनितवितण्डाजितबल भाण्डी-
रदयित खण्डीकृतनवहिण्डीरमदविहण्डीगण कलकुण्ठी-
कृतकलकण्ठीगण मणिकण्ठीस्फुरितसुकण्ठीप्रिय वरकण्ठीरवरण ॥धीर

दण्डी कुण्डलिभोगकाण्डनिभयोरुद्दण्डदोर्दण्डयोः
श्लिष्टश्चण्डिमडम्बरेण निबिडश्रीखण्डपुण्ड्रोज्ज्वलः ।
निर्धूतोद्यदचण्डरश्मिघटया तुण्डश्रिया मामकं
कामं मण्डय पुण्डरीकनयन त्वं हन्त हृन्मण्डलम् ॥२६॥

कन्दर्पकोदण्डदर्पक्रियोद्दण्डदृग्भङ्गिकाण्डीर संजुष्टभाण्डीर ॥धीर॥

त्वमुपेन्द्र कलिन्दनन्दिनीतटवृन्दावनगन्धसिन्धुर ।
जय सुन्दरकान्तिकन्दलैः स्फुरदिन्दीवरवृन्दबन्धुभिः ॥२७ ॥

इन्दीवरम्।

२५। जय जय हन्त द्विषदभिहन्तर्मधुरिमसंतर्पितजगदन्त-
मृदुल वसन्तप्रिय सितदन्त स्फुरितदृगन्त प्रसरदुदन्त
प्रभवदनन्त प्रियसख सन्तस्त्वयि रतिमन्तः स्वमुदहरन्त
प्रभुवर नन्दात्मजगुणकन्दासितनवकन्दाकृतिधर कुन्दा-
मलरद तुन्दात्तभुवन वृन्दावनभवगन्धास्पदमकरन्दा-
न्वितनवमन्दारकुसुमवृन्दार्चितकच वन्दारुनिखिलवृन्दा-
रकवरबन्दीडित विधुसंदीपितलसदिन्दीवरपरिनिन्दी-
क्षणयुग नन्दीश्वरपतिनन्दीहित जय॥ धीर॥

स्मितरुचिमकरन्दस्यन्दि वक्त्रारविन्दं
तव पुरुपरहंसान्विष्टगन्धं मुकुन्द।
विरचितपशुपालीनेत्रसारङ्गरङ्गं
मम हृदयतडागे सङ्गमङ्गीकरोतु॥ २८॥

अम्बरगतसुरविनतिविलम्बित तुम्बुरुपरिभविमुरलिकरम्बित।
शम्बरमुखमृगनिकरकुटुम्बित संभ्रमवलयितयुवतिविचुम्बित॥वीर॥

अम्बुजकुटुम्बदुहितुः कदम्बसंबाधबन्धुरे पुलिने।
पीताम्बर कुरु केलिं त्वं वीर नितम्बिनीघटया॥ २९॥

अरुणाम्भोरुहम्।

२७। जय रससंपद्विरचितझम्प स्मरकृतकम्प प्रियजनशंप
प्रवणितकम्पस्फुरदनुकम्प द्युतिजितशम्पस्फुटनवचम्प-
श्रितकचगुम्प श्रुतिपरिलम्बस्फुरितकदम्बस्तुतमुख डिम्भ-
प्रिय रविबिम्बोदयपरिजृम्भोन्मुखलसदम्भोरुहमुख लम्बो-
द्भटभुज लम्बोदरवरकुम्भोपमकुचबिम्बोष्ठयुवतिचुम्बो-
द्भट-परिरम्भोत्सुक कुरु शं भोस्तडिदवलम्बोर्जितमिलदम्भो-

धरसुविडम्बोद्धुर नतशंभो परिजितदम्भोलिगरिमसंभा-
वितभुजजम्भाहितमद लम्पाकमनसि संपादय मयि तं पा-
किममनुकम्पालवमिह ॥ धीर ॥

दिव्ये दण्डधरस्वसुस्तटभवे फुल्लाटवीमण्डले
वल्लीमण्डपभाजि लब्धमदिरस्तम्बेरमाडम्बरः ।
कुर्वन्नञ्जनपुञ्जगञ्जनमति-श्यामाङ्गकान्तिश्रिया
लीलापाङ्गतरङ्गितेन तरसा मां हन्त संतर्पय ॥३०॥

२८। अम्बुजकिरणविडम्बक खञ्जनपरिचलदम्बक ।
चुम्बितयुवतिकदम्बक कुन्तललुठितकदम्बक ॥ वीर ॥

प्रेमोद्वेल्लितवल्गुभिर्वलयितस्त्वं बल्लवीभिर्विमो
रागोल्लापितवल्लकीविततिभिः कल्याणवल्लीभुवि ।
सोल्लुण्ठं मुरलीकलाभिरमलं मल्लारमुल्लासय-
न्बाल्येनोल्लसिते दृशौ मम तडिल्लीलाभिरुत्फुल्लय ॥३१॥

फुल्लाम्बुजम् ।

२९। व्रजपृथुपल्लीपरिसरवल्लीवनभुवि तल्लीगणभृति मल्ली-
मनसिजभल्लीजितशिवमल्लीकुमुदमतल्लीजुषि गत झिल्ली-
परिषदि हल्लीसकसुखझल्लीरत परिफुल्लीकृतचलचिल्ली-
जितरतिमल्लीमद भर सल्लीलतिलक कल्यातनुशततुल्या-
हवरसकुल्याचटुलितखल्याप्रमथन कल्याणचरित ॥धीर॥

गोपीः संभृतचापलचापलताचित्रया भ्रुवा भ्रमयन् ।
विलस यशोदावत्सल वत्सलसद्धेनुसंवीत ॥ ३२ ॥

३०। बल्लवलीलासमुदयसमुचित पल्लवरागाधरपुटविलसित
वल्लभगोपीप्रवणित मुनिगणदुर्लभकेलीभरमधुरिमकण

मल्लविहाराद्भुततरुणिमधर फुल्लमृगाक्षीपरिवृतपरिसर
चिल्लिविलासार्पितमनसिजमद मल्लिकलापामलपरिमलपद
रल्लकराजीहरसुमधुरकल हल्लकमालापरिवृतकचकुल ॥वीर॥

बल्लवललनावल्लीकरपल्लवशीलितस्कन्धम् ।
उल्लसितः परिफुल्लं भजाम्यहं कृष्णकंकेल्लिम् ॥ ३३ ॥

चम्पकम् ।

३१ । संचलदरुणचञ्चलकरुणसुन्दरनयन कन्दरशयन
बल्लवशरण पल्लवचरण मङ्गलघुसृणपिङ्गलमसृण
चन्दनरचन नन्दनवचन खण्डितशकट दण्डितविकट-
गर्वितदनुज पर्वितमनुज रक्षितधवल लक्षितगवल
पन्नगदलन सन्नगकलन बन्धुरवलन सिन्धुरचलन
कल्पितमदनजल्पितसदन मंजुलमुकुट वंजुललकुट-
रञ्जितकरभ गंजितशरभमण्डलवलित कुण्डलचलित-
संदितलपन नन्दिततपनकन्यकसुषुम वन्यककुसुम-
गर्भक विरणदर्भकशरण तर्णकवलित वर्णकललित
शं वरवलय डम्बर कलय ॥ देव ॥

दानवघटालवित्रे धातुविचित्रे जगच्चित्रे ।
हृदयानन्दिचरित्रे रतिरास्तां बल्लवीमित्रे ॥ ३४ ॥

३२ । रिङ्गदुरुभृङ्गतुङ्गगिरिशृङ्गशृङ्गरुतभङ्गसङ्गधृतरङ्ग ॥ वीर ॥

त्वमत्र चण्डासुरमण्डलीनां, रण्डावशिष्टानि गृहाणि कृत्वा ।
पूर्णान्यकार्षीर्व्रजसुन्दरीभि-, र्वृन्दाटवीपुण्डकमण्डपानि॥३६॥

वंजुलम् ।

३३ । जय जय सुन्दरविहसित मन्दरविजितपुरंदर निजगिरिकन्दर-
रतिरसशंधर मणियुतकंधर गुणमणिमन्दिर हृदि वलदिन्दिर

गतिजितसिन्धुर परिजनबन्धुर पशुपतिनन्दन तिलकितचन्दन विधिकृतवन्दन पृथुहरिचन्दनपरिवृतनन्दनमधुरिमनिन्दन-मधुवन वन्दितकुसुमसुगन्धितवनवररञ्जित रतिभरसंजित शिखिदलकुण्डलसहकृतभण्डिल नवसिततन्दुलजयिरदमण्डल रतिरणपण्डित वरतनुभण्डित नखपदमण्डित दशनविखण्डित ॥धीर

निनिन्द निजमिन्दिरा वपुरवेक्ष्य यासां श्रियं
विचार्य गुणचातुरीमचलजा च लज्जां गता ।
लसत्पशुपनन्दिनीततिभिराभिरानन्दितं
भवन्तमतिसुन्दरं व्रजकुलेन्द्र ! वन्देमहि ॥ ३६ ॥

रसपरिपाटी-स्फुटतरुवाटी-मनसिजधाटी-प्रिय नवशाटीहर जय ॥वीर

संभ्रान्तैः सषडङ्गपातमभितो वेदैर्मुदा वन्दिता
सीमन्तोपरि गौरवादुपनिषद्देवीभिरप्यर्पिता ।
आनम्रं प्रणवेन च प्रणयतो हृष्टात्मनाभिष्टुता
मूर्द्धा ते मुरलीरुतिर्मुररिपो ! शर्माणि निर्मातु नः ॥३७॥

कुन्दम् ।

नन्दकुलचन्द्र लुप्तभवतन्द्र कुन्दजयिदन्त दुष्टकुलहन्त-रिष्टसुवसन्त मिष्टसमुदन्त संदलितमल्लिकन्दलितवल्लि-गुंजदलिपुंजमंजुतरकुंजलब्धरतिरङ्ग हृद्यजनसङ्ग-शर्मलसदङ्ग हर्षकृदनङ्ग मत्तपरपुष्टरम्यकलघुष्ट गन्धभरजुष्ट पुष्पवनतुष्ट कृत्तखलयक्ष युद्धनयदक्ष वल्गुकचपक्षबद्धशिखिपक्ष पिष्टनततृष्ण तिष्ठ हृदि कृष्ण ॥वीर॥

तव कृष्ण ! केलिमुरली, हितमहितं च स्फुटं विमोहयति ।
एकं सुधोर्मिसुहृदा, विषविषमेणापरं ध्वनिना ॥३८॥

३६। संनीतदैतेयनिस्तार कल्याणकारुण्यविस्तार।
पुष्पेषुकोदण्डटङ्कारविस्फारमञ्जीरझङ्कार ॥वीर॥

रङ्गस्थले ताण्डवमण्डलेन, निरस्य मल्लोत्तमपुण्डरीकान्।
कंसद्विषं चण्डमखण्डयद्यो, हृत्पुण्डरीके स हरिस्तवास्तु ॥३९॥

बकुलभासुरम्।

३७। जय जय वंशीवाद्यविशारद शारदसरसीरुहपरिभावक-
भावकलितलोचनसंचारण चारणसिद्धवधूधृतिहारक
हारकलापरुचाञ्चितकुण्डल कुण्डलसद्गोवर्धनभूषित
भूषितभूषणचिद्घनविग्रह विग्रहखण्डितखलवृषभासुर
भासुरकुटिलकचार्पितचन्द्रक चन्द्रकलापरुचाभ्यधिकानन
काननकुंजगृहस्मरसंगर सङ्गरसोद्धुरबाहुभुजङ्गम
जङ्गमनवतापिच्छनगोपम गोपमनीषितसिद्धिषु दक्षिण
दक्षिणपाणिगदण्डसभाजित भाजितकोटिशशाङ्कविरोचन
रोचनया कृतचारुविशेषक शेषकमलभवसनकसनन्दन-
नन्दनगुण मा नन्दय सुन्दर ॥ वीर ॥

भवतः प्रतापतरणावुदेतुमिह लोहितायति स्फीते।
दनुजान्धकारनिकराः शरणं भेजुर्गुहाकुहरम् ॥ ४० ॥

३८। पुलिनधृतरङ्गयुवतिकृतसङ्ग मदनरसभङ्गगरिमलसदङ्ग ॥वीर॥

पशुषु कृपां तव दृष्ट्वा नूनमिहारिष्टवत्सकेशिमुखाः।
दर्पं विमुच्य भीताः पशुभावं भेजिरे दनुजाः ॥ ४१ ॥

बकुलमङ्गलम्।

त्वं जय केशव केशवलस्तुत वीर्यविलक्षण लक्षणबोधित
केलिषु नागर नागरणोद्धत गोकुलनन्दन नन्दनतिव्रत-
सान्द्रमुदर्पक दर्पकमोहन हे सुषमानवमानवतीगण-

मानिनिरासक रासकलाश्रित सस्तनगौरवगौरवधूवृत
कुंजशतोषित तोषितयौवत रूपभराधिकराधिकयार्चित
भीरुविलम्बित लम्बितशेखर केलिकुलालसलालसलोचन
रोषमदारुणदारुणदानवमुक्तिदलोकन लोकनमस्कृत-
गोपसभावक भावकशर्मद हन्त कृपालय पालय मामपि ॥वीर॥

पराभवं फेनिलवक्त्रतां च, बन्धं च भीतिं च मृतिं च कृत्वा ।
पवर्गदातापि शिखण्डमौले !, त्वं शात्रवाणामपवर्गदोऽसि ॥४२॥

४०। प्रणयभरितमधुरचरित भजनसहितपशुपमहित ॥ देव ॥

नवशिखिशिखण्डशिखरा, प्रसूनकोदण्डचित्रशस्त्रीव ।
क्षोभयति कृष्ण ! वेणी, श्रेणीरेणीदृशां भवतः ॥४३॥

अनुभूय विक्रमं ते युधि लब्धाः कांदिशीकत्वम् ।
भित्त्वा किल जगदण्डं प्रपलायांचक्रिरे दनुजाः ॥४४॥

मञ्जर्यां कोरकः ।

४१। मानवतीमदहारिविलोचन दानवसंचयघूकविरोचन ।
डिण्डिमवादिसुरालिसभाजित चण्डिमशालिभुजार्गलराजित ।
दीक्षितयौवतचित्तविलोभनवीक्षित सुस्मितमार्दवशोभन ।
पर्वतसंधृतिनिर्धुतपीवरगर्वतमःपरिमुग्धशचीवर ।
रंजितमंजुपरिस्फुरदम्बर गंजितकेशिपराक्रमडम्बर ।
कोमलताङ्कितवागवतारक सोमललाममहोत्सवकारक ।
हंसरथस्तुतिशंसितवंशक कंसवधूश्रुतिनुन्नवतंसक ।
रङ्गतरङ्गितचारुदृगञ्चल संगतपञ्चशरोदयचञ्चल ।
लुञ्चितगोपसुतागणशाटक संचितरङ्गमहोत्सवनाटक ।
तारय मामुरुसंसृतिशातन धारय लोचनमत्र सनातन ॥धीर॥

तुरगदनुसुताङ्ग्यावभेदे दधानः
कुलिशघटितटङ्कोद्दण्डविस्फूर्जितानि ।
तदुरुविकटदंष्ट्रोन्मृष्टकेयूरमुद्रः
प्रथयतु पटुतां वः कैशवो वामबाहुः ॥ ४५ ॥

४२। माधव विस्फुर दानवनिष्ठुर यौवतरञ्जित सौरभसञ्जित ॥वीर॥

पलितंकरणी दशा प्रभो ! मुहुरन्धंकरणी च मां गता ।
सुभगंकरणी कृपा शुभैर्न तवाढ्यंकरणी च मय्यभूत् ॥४६॥

गुच्छः ।

४३। जय जलदमण्डलीद्युतिनिवहसुन्दर
स्फुरदमलकौमुदीमृदुहसितबन्धुर
व्रजहरिणलोचनावदनशशिचुम्बक
प्रचुरतरखंजनद्युतिविलसदम्बक
स्मरसमरचातुरीनिचयवरपण्डित
प्रणययुतराधिकापटिमभरभण्डित
क्वणदतुलवंशिकाहृतपशुपयौवत
स्थिरसमरमाधुरीकुलरमितदैवत
ग्रथितशिखिचन्द्रकस्फुटकुटिलकुन्तल
श्रवणतटसंचरन्मणिमकरकुण्डल
ग्रथितनवताण्डवप्रकटगतिमण्डल
द्विजकिरणधोरणीविजितसिततण्डुल
स्फुरितवरदाडिमीकुसुमयुतकर्णक
छदनवरकाकलीहृतचटुलतर्णक ॥ धीर ॥

पुंनागस्तबकनिबद्धकेशजूटः कोटीरीकृतवरकेकिपक्षकूटः ।
पायान्मां मरकतमेदुरः स तन्वा कालिन्दीतटविपिनप्रसूनधन्वा ॥

४४। गर्गप्रिय जय भर्गस्तुत रससर्गस्थिरनिजवर्गप्रवणित ॥ वीर ॥

दनुजवधूवैधव्यव्रतदीक्षाशिक्षणाचार्यः ।
स जयति विदूरपाती मुकुन्द ! तव शृङ्गनिर्घोषः ॥ ४८ ॥

कुसुमम् ।

४५। कुसुमनिकरनिचितचिकुर नखरविजितमणिजमुकुर ।
सुभटपटिमरमितमथुर　विकटसमरनटनचतुर ।
समदभुजगदमनचरण　निखिलपशुपनिचयशरण ।
मुदितमदिरमधुरनयन　शिखरिकुहररचितशयन ।
रमितपशुपयुवतिपटल　मदनकलहघटनचटुल ।
विषमदनुजनिवहमथन　भुवनरसदविशदकथन ।
कुमुदमृदुलविलसदमलहसितमधुरवदनकमल ।
मधुपसदृशविचलदलक मसृणघुसृणकलिततिलक ।
निभृतमुषितमथितकलस सततमजित मनसि विलस ॥वीर॥

सखिचातकजीवातुर्माधव ! सुरकेकिमण्डलोल्लासि ।
तव दैत्यहंसभयदं शृङ्गाम्बुदगर्जितं जयति ॥४९॥

४६। पुरुषोत्तम　वीरव्रत　यमुनाद्भुततीरस्थित ।
मुरलिध्वनिपूरक्रिय　सुरभीव्रजनादप्रिय ॥ धीर ॥

जगतीसभावलम्बः स तव जयत्यम्बुजाक्ष ! दोःस्तम्भः ।
रभसाद्विभेद दनुजान्प्रतापनृहरिर्यतोऽभ्युदितः ॥ ५० ॥

चित्रं मुरारे ! सुरवैरिपक्षस्त्वया समन्तादनुबद्धयुद्धः ।
अमित्रमुच्चैरविभिद्य भेदं मित्रस्य कुर्वन्नमृतं प्रयाति ॥५१॥

त्रिभंग्यां दण्डकत्रिभङ्गी ।

४७। श्रितमघजलधेर्वहित्रं चरित्रं सुचित्रं विचित्रं
फणित्रं समित्रं पवित्रं लवित्रं रुजाम् ।
जगदपरिमितप्रतिष्ठं पटिष्ठं बलिष्ठं गरिष्ठं
वरिष्ठं म्रदिष्ठं सुनिष्ठं दविष्ठं धियाम् ।

निखिलविलसितेऽभिरामं सरामं मुदा मंजुदाम-
  न्नभामं ललामं धृतामन्दधामन्नये ।
मधुमथन हरे मुरारे पुरारेरपारे ससारे
  विहारे सुरारेरुदारे च दारे प्रभुम् ।
स्फुरितमिनसुतातरङ्गे विहङ्गेशरङ्गेण गङ्गे-
  ष्टभङ्गे भुजङ्गेन्द्रसङ्गे सदङ्गेन भोः ।
शिखरिवरदरीनिशान्तं प्रयान्तं सकान्तं विभान्तं
  नितान्तं च कान्तं प्रशान्तं कृतान्तं द्विषाम् ।
दनुजहर भजाम्यनन्तं सुदन्तं नुदन्तं दृगन्तं
  हसन्तं वसन्तं भजन्तं भवन्तं सदा ॥ वीर ॥

पीत्वा बिन्दुकणं मुकुन्द ! भवतः सौन्दर्यसिन्धोः सकृ-
  त्कन्दर्पस्य वशं गता विमुमुहुः के वा न साध्वीगणाः ?
दूरे राज्यमयन्त्रितस्मितकलाभ्रूवल्लरीताण्डव-
  क्रीडापाङ्गतरङ्गितप्रभृतयः कुर्वन्तु ते विभ्रमाः ॥ ५२ ॥

४८। चारुतटरासनट गोपभट पीतपट
  पद्मकर दैत्यहर कुञ्जचर वीरवर
  नर्ममय कृष्ण जय ॥ नाथ ॥

संसाराम्भसि दुस्तरोर्मिगहने गम्भीरतापत्रयी-
  कुम्भीरेण गृहीतमुग्रमतिना क्रोशन्तमन्तर्भयात् ।
दीप्रेणाद्य सुदर्शनेन विबुधक्लान्तिच्छिदाकारिणा
  चिन्तासंततिरुद्धमुद्धर हरे ! मच्चित्तदन्तीश्वरम् ॥५३॥

विदग्धत्रिभङ्गी ।

४९। चण्डीप्रियनत चण्डीकृतबलरण्डीकृतखलवल्लभ बल्लव
  पट्टाम्बरधर भट्टारक बककुट्टाक ललितपण्डितमण्डित

नन्दीश्वरपतिनन्दीहितभर संदीपितरससागर नागर
अङ्गीकृतनवसंगीतक वरभङ्गीलवह्रतजङ्गमलङ्गिम
ऊर्वीप्रियकर खर्वीकृतखल–दर्वीकरपतिगर्वितपर्वत
गोत्राहितकर गोत्राहितदय गोत्राधिपधृतिशोभनलोभन
वन्यास्थितबहुकन्यापटहर धन्याशयमणिचोर मनोरम
शम्पारुचिपट संपालितभवकम्पाकुलजन फुल्ल समुल्लस ।।धीर।।

पिष्ट्वा संग्रामपट्टे पटलमकुटिले दैत्यगोकण्टकानां
क्रीडालोठीविघट्टैः स्फुटमरतिकरं नैचिकीचारुकाणाम् ।
वृन्दारण्यं चकाराखिलजगदगदंकारकारुण्यधारो
यः संचारोचितं वः सुखयतु स पटुः कुञ्जपट्टाधिराजः ।।५४।।

५०। पिच्छलसद्घननीलकेश चन्दनचर्चितचारुवेश ।
खण्डितदुर्जनभूरिमाय मण्डितनिर्मलहारिकाय ।। वीर ।।

गीर्वाणं स्फुटमखिलं विवर्धयन्तं
निर्वाणं दनुजघटासु संघटय्य ।
कुर्वाणं व्रजनिलयं निरन्तरोद्य-
त्पर्वाणं मुरमथन ! स्तुवे भवन्तम् ।। ५५ ।।

उदञ्चदतिमंजुलस्मितसुधोर्मिलीलास्पदं
तरङ्गितवराङ्गनास्फुरदनङ्गरङ्गाम्बुधिः ।
दृगिन्दुमणिमण्डलीसलिलनिर्झरस्यन्दनो
मुकुन्द ! मुखचन्द्रमास्तव तनोति शर्माणि नः ।।५६।।

मिश्रकलिका ।

५१। दुष्टदुर्दमारिष्टकण्ठीरवकण्ठविखण्डनखेलदष्टापद नवीनाष्टापद-
विस्पर्धिपट्टाम्बरपरीत गरिष्ठगण्डशैलसपिण्डवक्षःपट्ट पाटव-

दण्डितचटुलभुजंगम कन्दुकविलसितलंघिम भण्डिलविचक्किलमण्डित संगरविहरणपण्डित दन्तुरदनुजविडम्बक कुण्ठितकुटिलकदम्बक । खचिताखण्डलोपलविराजदण्डजराजकुण्डलमण्डितमंजुलगण्डस्थल विशङ्कटभाण्डीरतटीताण्डवकलारञ्जितसुहृन्मण्डल नन्दविचुम्बित-कुन्दनिभस्मित गन्धकरम्बित शंदविचेष्टित तुन्दपरिस्फुरदण्डकडम्बर दुर्जनभोजेन्द्रकण्टककन्दोद्धारणोद्दामकुद्दाल विनम्रविपद्दारुणध्वान्त-विद्रावणमार्तण्डोपमकृपाकटाक्ष शारदाचण्डमरीचिमाधुर्यविडम्बि-तुण्डमण्डल लोष्टीकृतमणिकोष्ठीकुलमुनिगोष्ठीश्वर मधुरोष्ठीप्रिय परमेष्ठीडित परमेष्ठीकृतनर ॥ धीर ॥

उपहितपशुपालीनेत्रसारङ्गतुष्टिः
प्रसरदमृतधाराधोरणीधौतविश्वा ।
पिहितरविसुधांशुः प्रांशुतापिञ्छरम्या
रमयतु बकहन्तुः कान्तिकादम्बिनी वः ॥ ५७ ॥

अथ वा साप्तविभक्तिकी कलिका ।

५२। यः स्थिरकरुणस्तर्जितवरुणस्तर्पितजनकः संमदजनकः ।
प्रणतविमायं जगुरनपायं घनरुचिकायं सुकृतिजना यम् ।
सुजनकलितकथनेन प्रबलदनुजमथनेन
प्रणयिषु रतमभयेन प्रकटरतिषु किल येन ।
यस्मै परिष्वस्तदुष्टाय चक्रुः स्पृहां माल्यजुष्टाय
दिव्याः स्त्रियः केलितुष्टाय कन्दर्परङ्गेण पुष्टाय ।
धृतोत्साहपूराद्द्युतिक्षिप्तसूराद्यतोऽरिर्विदूराद्भयं प्राप शूरात् ।
यस्योज्ज्वलाङ्गस्य संचार्यपाङ्गस्य वेणुर्ललामस्य हस्तेऽभिरामस्य ।
स्मितविस्फुरितेऽजनि यत्र हिते रतिरुल्लसिते सुदृशां ललिते ।
स त्वं जय जय दुष्टप्रतिभय भक्तस्थिरदय लुप्तव्रजभय ॥वीर॥

हंसोत्तमाभिलषिता सेवकचक्रेषु दर्शितोत्सेका ।
मुरजयिनः कल्याणी करुणाकल्लोलिनी जयति ॥५८॥

५३। मित्रकुलोदितनर्मसुमोदित रञ्जितराधिक शर्मभराधिक ॥धीर॥

मधुरेश ! माधुरीमय ! माधव ! मुरलीमतल्लिकामुग्ध !
मम मदनमोहन ! मुदा मर्दय मनसो महामोहम् ॥५९॥

अक्षरमयी ।

५४। अच्युत जय जय आर्तकृपामय इन्द्रमखार्दन ईतिविशातन
उज्ज्वलविभ्रम ऊर्जितविक्रम ऋद्धिधुरोद्धर ॠभुदयापर
ऌदिवकृपेक्षित ॡवदलक्षित एधितबल्लव ऐन्दवकुलभव
ओजःस्फूर्जित औग्र्यविवर्जित अंसविशङ्कट अष्टापदपट
कङ्कणयुतकर खण्डितखलवर गतिजितकुंजर घनघुसृणाम्बर
ङुतमुरलीरत चलचिल्लीलत छलितसतीशत जलजोद्भवनुत
झषवरकुण्डल ञोङुयितदल टङ्कितभूधर ठनिभाननवर-
डमरघटाहर ढक्कितकरतल णखरधृताचल तरलविलोचन-
थूत्कृतखंजन दनुजविमर्दन धवलावर्धन नन्दसुखास्पद
पङ्कजसमपद फणिनुतिमोदित बन्धुविनोदित भंगुरितालक
मंजुलमालक यष्टिलसद्भुज रम्यमुखाम्बुज ललितविशारद-
वल्लवरङ्गद शर्मदचेष्टित षट्पदवेष्टित सरसीरुहधर
हलधरसोदर क्षणदगुणोत्कर ॥ वीर ॥

कर्णे कल्पितकर्णिकः कलिकया कामायितः कान्तिभिः
कान्तानां किलकिञ्चितं किसलयन्कीलालधीः कीर्तिभिः ।
कुर्वन्कूर्दनकानि केशरितया कैशोरवान्कोटिशः
कोपी कौकुरकंसकश्क्रतिकः कृष्णः क्रियात्कांक्षितम् ॥६०॥

५५। सौरीतटचर गौरीव्रतपरगौरीपटहर चौरीकृतकर ॥ वीर ॥

प्रेमोरुहट्टहिण्डक ! कक्खटसुभटेन्द्रकण्ठकुट्टाक !
कुरु कौंकुमपट्टाम्बर ! भट्टारक ! ताण्डवं हृदि मे ॥ ६१ ॥

सर्वलघुः ।

५६। चरणचलनहतजरठशकटक रजकदलन वशगतपरकटक
नटनघटनलसदगवरकटक सकनकमरकतमयनवकटक
कपटरुदित नटदकठिनपदतट-विघटितदधिघटनिबिडितसुशकट
रुचितुलितपुरट-पटलरुचिरपट-घटितविपुलकट कुटिलचिकुरघट
रविदुहितृनिकट-लुठदजरठजट-विटपनिचितवट-तटपटुतरनट
निजविलसितहठ-विचटितसुविकटचटुलदनुजघट
जय युवतिषु शठ ॥ वीर ॥

स्फुटनाट्यकडम्बदण्डितद्रढिमोड्डामरदुष्टकुण्डली ।
जय गोष्ठकुटुम्बसंवृतस्त्वमिडाडिम्बकदम्बडुम्बक ! ६२॥

५७। रसनमुखर सुखरनखर दशनशिखरविजितशिखर ॥ धीर ॥

विवृतविविधबाधे भ्रान्तिवेगादगाधे
बलवति भवपूरे मज्जतो मेऽविदूरे ।
अशरणगणबन्धो ! हे कृपाकौमुदीन्दो !
सकृदकृतविलम्बं देहि हस्तावलम्बम् ॥६३॥

नामानि प्रणयेन ते सुकृतिनां तन्वन्ति तुण्डोत्सवं
धामानि प्रथयन्ति हन्त जलदश्यामानि नेत्राञ्जनम् ।
सामानि श्रुतिशष्कुलीं मुरलिकाजातान्यलंकुर्वते
कामानिर्वृतचेतसामिह विभो ! नाशापि नः शोभते ॥६४॥

व्युत्पन्नः सुस्थिरमतिर्गतग्लानिर्गलस्वनः ।
भक्तः कृष्णे भवेद्यः स बिरुदावलिपाठकः ॥ ६५ ॥

रम्यया बिरुदावल्या प्रोक्तलक्षणयुक्तया ।
स्तूयमानः प्रमुदितो वासुदेवः प्रसीदति ॥ ६६ ॥

यः स्तौति बिरुदावल्या मथुरामण्डले हरिम् ।
अनया रम्यया तस्मै तूर्णमेष प्रसीदति ॥ ६७ ॥

इति श्रीमद्रूपगोस्वामि–विरचित–स्तवमालायां
श्रीगोविन्दबिरुदावली समाप्ता ।

# श्रीगोपालबिरुदावली ।

गोपालसुखदा सेयं गोपालबिरुदावली ।
अर्थाय श्रयतां कल्पवीरुदावलिकल्पताम् ॥ १ ॥

१। ब्रह्मब्रह्मजशार्व–सर्वजनता रज्यज्जनाः श्रीपतेः
शब्दब्रह्मगणाश्च ते च निखिलब्रह्माण्डवैकुण्ठगाः ।
अश्रान्तोष्ठमघघ्नगोष्ठचरितं गायन्त एव स्थिताः
यद्यद्य प्रतिपद्यतां मम कृतं गद्यं च पद्यं च किम् ॥ २ ॥

मुग्धानामपि लुब्धानां केषांचित् कविमानिनाम् ।
दृश्यते कविता तद्वदत्राप्यत्रपता मम ॥ ३ ॥

चण्डवृत्तस्य नखे वर्धितम् ।

नित्यविहृतिनिजवर्गसुखप्रथ क्षित्यवतरणजसर्वगसत्कथ ।
अक्रमजिततुलसौष्ठवसत्प्रभ शक्रमणिजघृणिनिर्जयिसत्प्रभ ।
स्वर्णघटितनिभसत्पटसंहित कर्णसुखदबहुसद्गुणबृंहित ।
चित्रभमणिगणसंग्रहविग्रह मित्रसुखदकृतशत्रुविनिग्रह ।

कीर्तिमहसिजगदिष्टसमर्पक कीर्तितलवनिजसंज्ञकतर्पक ।
वंशजकलवशसर्वचराचर वंशमहितपितृसिन्धुसुधाकर ।
उग्रनरकगणयोग्यविमुक्तिद उग्रकिरणमुखदृग्रुचियुक्तिद ।
कृष्णसुभगजगदुद्गतधामक कृष्णपरमतमशास्तदनर्मक ।
श्रद्धितमनसि निबद्धवदासित सद्धितकरुणरसप्रतिवासित ।
दुस्तरभयजनशर्मदसुस्मय पुस्तकशतशतसुस्तवदृग् जय ॥वीर॥४॥

सुरूपगणशेखरे रुचिजितेन्द्रनीलेश्वरे
प्रशस्तगुणमण्डले सकलसंपदाखण्डले ।
अनन्तबलवीर्यके विजितदुष्टशौटीर्यके
समस्तसुखदक्रिये हृदयमस्तु वंशीप्रिये ॥ ५ ॥

श्रितवृन्दावनहितवृन्दावन अवलोकामृतभृतलोकावृत ॥वीर॥६॥

२। वीरभद्रः ।

सत्यं वृन्दावनमनु सर्वादृश्ये पदे सगोष्ठस्त्वम् ।
विभवसि सततं तद्वल्लोकैरालोक्यसेऽभीक्ष्णम् ॥ ७ ॥

स्निग्धस्निग्धस्वकभृतिकृतसुख स्वर्वत्पर्वस्वजनुषिकृतसुख ।
गच्छद्यच्छज्जनवृतमहपद तुष्यत्पुष्यद्व्रजनृपधृतमद ।
रक्षःपक्षस्त्रियमनुसृतिदद अस्तव्यस्तस्वशकटमृदुपद ।
भर्गद्गर्गप्रकटितसदभिध तर्जज्जर्जन्मधुदभिहतिविध ।
वर्णस्वर्णक्रयफलसकुतुक श्वः श्वः शश्वत्सुखमुखरितशुक ।
चित्रन्मित्रप्रचयचरितचित भक्तस्वक्तस्मितबलवलयित ।
गच्छद्वत्सस्थगनकृदनुगम सद्मच्छद्मप्रतिनयधृतशम ।
नव्यस्त्रव्यक्रमविहरणरण गव्यस्तव्यस्वयमपहृतिपण ।
प्रस्वह्नस्वप्रतिसितसदुदर वर्ग्यस्वर्ग्यद्वयतरुगतिहर ।
त्यक्तव्यक्तवलमसुविहृदविक वृन्दद्वृन्दस्वविपिनवसतिक ॥वीर॥८॥

जनिस्तव जनिं मुदामसृजदृद्धिमृद्धिः स्फुटं
सदा विहृतिरुच्चकैर्विहृतिमेवमेकात्मके ।
उदञ्चति सुधांबुधिप्लवरसे ममज्ज व्रज-
स्ततः प्रबलमुच्छलत्यपि ममज्जुराशा दश ॥ ९ ॥

स्तव्यप्रभाभास–नव्यव्रजावास ।
वृन्दाह्वयारण्य–वृन्दान्वयागण्य–
नर्मोचिद्व्रीड–शर्मोचितक्रीड ॥ वीर ॥ १० ॥

३। समग्रः ।

गोवर्धनवृन्दावनयमुनापुलिनानि रम्याणि ।
सुखरूपस्य च भवतः सुखदान्यस्मान् विमोहयन्ति ॥ ११ ॥

विनुन्नवत्सक वितुन्नवत्सक निगीर्णिकृद्बकविकीर्णिकारक ॥वीर॥

नाश्चर्यं स भवान् यदाशु विदधे व्योमासुरे व्योमतां
मेषस्तेयविधानबाल्यविहृतौ स्तेनच्छलं गच्छति ।
किन्तु स्वादिकसर्वगीर्णिकृदघं कृत्वानघं निर्ममे
यद्दामादिकमित्रचित्रमिदमध्यास्ते सदा मन्मनः ॥१३॥

अर्भकालुंचकविधिधीवंचक कृपयामर्षक अनुगाकर्षक ॥वीर॥१४

४। अच्युतः ।

यदपि व्रजनिजमित्राण्यपहरमाणो विधिर्व्यधान्मायाम् ।
तदपि ददद् व्रजभक्तिं तस्मिंस्त्वमसि क्षमाकृपापूर्णः ॥१५॥

विजितकरेणुस्थितिनिजधेनु–व्रजधृतरेणुस्त्वमसि सवेणुः ।
फणिह्रदगामिन् विषहतिकामिन् स्वयमथ तस्मिन् पतनतरस्वि-
न्नहिपतियुद्ध्वा युवरथरुद्ध्वा नटनपरास्तं भ्रम कुरुथास्तं
दवितमकार्षीरिति नुतिरार्षी ॥ धीर ॥ १६ ॥

अनुदिनमथ चारं चारमात्मीयधेनू-
रखिलविपिनलक्ष्मीं रंजयन् कंजनेत्र ।
नटनपटिमभिस्तं कालियं मूर्ध्नि मृद्नं-
स्तपनदुहितृगर्तं निर्विषापं चकर्थं ॥ १७ ॥

अथवा—गवनुगखेलः सखिकृतमेलः समिदतिवेलः खलजयिहेलः ।
फणिह्लदयातः स्फुटविषघात-प्रथनसशातस्त्वमसि विभातः ।
फणिपतिमस्ते बहुमणिशस्ते—ऽजनि शतहस्ते नटनभरस्ते ।
सपरिकरागस्करखरनागः प्रवसनरागश्रितह्लदभागः ।
प्रबलविलासः कृततदुदासः श्रितनिजवासः स्फुर मृदुहासः
॥ श्रीश ॥ १८ ॥

जलमनु विषवह्निं सुष्ठु निर्वर्ण्य तर्हि
स्थलमनु वनवह्निर्येन निर्वाप्यते स्म ।
तदुभयकृतदाहं गोष्ठमप्या स्म दृष्ट्या
रचितममृतसिक्तं तं भवन्तं भजामि ॥ १९ ॥

वृन्दावनपशुवृन्दावनसुख-सन्दानितशुभकन्दाशय जय ॥वीर॥२०॥

५। उत्पलम् ।

धेनूनां परिरक्षणाय विहरन् धिन्वन् स्वबन्धून् वधं
कुर्वन् धेनुकराक्षसस्य विदधद्धामागतिं च क्रमात् ।
षष्ठेऽब्देऽपि मुखादिसौष्ठवरुचा कैशोरजुष्टश्रियं
पुष्टीकृत्य दृशां हरे वरदृशां धिन्वन् गतिं नन्दसि ॥२१॥

वल्लभनर्तन मल्लभवर्तन बिल्वफलादिकमिल्लसिताधिक ।
पश्चनुकृद्द्रवदश्वसमद्रव वल्गदनर्गलवर्गनिरर्गल
पूर्वजहारकधुर्वणकारक वृद्धदवक्षयकृद्धयकृद्दय ॥ धीर ॥२२॥

सा सखिभिस्तव लीला स्पर्धाबद्धेव बुध्यते देव ।
तस्यां तव दवपानं व्यनक्ति तेषां सुखाय तां सर्वाम् ॥२३॥

माधवाभिन्नवदुष्मतामिन्न वारिदासक्तकालतारक्त ।
शारदागण्यलीलयापण्य चित्रहेमन्तशोभयानन्त ।।वीर।।२४।।

पाविकारब्धकाकलीलब्ध-मोदजीवस्थक्षोभितप्रस्थ ।।वीर।।२५।।

६। तुरङ्गः ।

मुहुर्मुहुरपि स्फुरद्विभवमात्मवेणुक्वणं
विलक्षणतया दधत् परमशिक्षया स्वीयया ।
सचेतनमचेतनं विचलितं मिथः सन्दधे
भवानिति पुरा कथं भवति यौवतं वाचितम् ।।२६।।

इन्द्रकमखकृतिखण्डन सुन्दरगिरिसवमण्डन ।
बन्धुरपरतनुसंजन बन्धुनिकरमदरंजन ।
अंजितगिरिपरितःक्रम संचितनिजजनसंभ्रम ।
अंगवलितनिजमन्दिर संगमिलितलसदिन्दिर ।
भंगुरहृदयपुरन्दर- भंगदविलसितसुन्दर ।
उन्नतगिरिसमुदंचक नुन्नजलदविषवंचक ।
किंच सुरपनतिसत्कृप सिंचदमरगणसन्नृप ।।धीर।।२७।।

पित्राद्यं स्वाभिवाद्यं कुलममरपतेर्याजकं तेन तत्रा-
वज्ञातं चावमृश्य प्रतिहतसहनस्तस्य यज्ञं विलुंपन् ।
तद्वृष्टिं क्लिष्टसृष्टिं दृशि विदधदलब्धाद्रिमप्यग्रहस्ते
यस्तं नः शस्तमव्याद् व्रजजनशरणं स स्वयं तत्र तत्र ।।२८।।

दिविजाभिषेककलितातिरेक सुखसादतीवकृतसागजीव ।।वीर।।२९।।

७। गुणरतिः ।

त्वममरपतिभिः सिक्तः समजनि सत्त्वं समस्तमुत्सिक्तम् ।
यत्र परस्परमन्तः स्निग्धीभावान्मुदा दिग्धम् ।।३०।।

वरुणाहृतपितृकरुणातदवितृ-चरितार्चितगुणसरितासुनिपुण ।
तदुपाहृतचरसदुपायनवर-सहितागतिकर सहिताञ्चिततर-
जनकादवगतजनकामदतत-विभयाक्रमधर विभवास्पदतर-
नयनान्वयकृतिनयनान्वयभृतिवलिताञ्चितपदकलिताखिलमद ॥वीर॥

तरुणारुणकंजलोचनं वरुणाहृततातमोचनम् ।
निजलोकविलोकमाश्रये निजलोकहृशस्तमाश्रये ॥३२॥

रंगदहैमनसंगशनैस्तन-वस्त्रधृतक्रमशास्त्रहृतक्लम ।
बंहितकैश्शिरलंघितशैशिर शन्ददकन्दलनन्दकसन्दल-
दंकगषट्पदटंकणसत्पद-पुष्पगणक्षण दुष्पर्शलक्षण-
शुष्मसमुज्ज्वलदुष्ममिलद्बल-लंघकसद्वनसंघसमर्धन ।
मित्रगणेलितचित्रकखेलित संचितसत्तटरंजिततद्वट ।
सुन्दरहृक्स्मितकुन्दजिदिङ्गित-संहितसच्छलरंहितसद्बल-
संहतपाटवजंहतदानव भीतसुहृज्जवपीतबृहद्दव ।
अंबुधरस्रवदंबुभरद्रव रंगनिभाक्षितिसंगरुचिस्थिति-
वन्यनिरीक्षणधन्यतमक्षण लक्षसरःशुचिपक्षशरद्रुचि-
विस्तृतिसस्पृह विस्मृतभृद्गृह सर्वसमन्वयपर्वकृदन्वय ।
वेण्वनुवादनधेन्वनुसादन ॥ वीर ॥ ३३ ॥

८। मातंगखेलितम् ।

धाष्टर्यं बत वेणोर्यः कर्षति दूराद् विमानानि ।
शीलं तव मधुरिम्णः स्तभ्नात्यमरीस्ततः पतन्तीर्यः ॥३४॥

अंबिकावन्ययात्रया धन्य लीलयागण्य तातखातफण्य-
प्राकृदगण्यकारितापण्य होरिकारंगगोपिकासंग-
भाविताासंग खेलिताभंग-योषिदातंगकारितासंग-
धावभाक्शंखचूडकाशंख-दारणात्पंकनाशनानंक ॥ वीर ॥३५॥

... ... ... ...

श्रृंगिणीवृन्दचारणाबुन्द–कारणानन्द भाविनीशन्द-
गीतिकास्पन्दलीलताकन्द सर्वथामन्द सर्वकास्कन्द-
भीषिताषण्डशश्वदुद्दण्ड–चेष्टयारिष्टमारणाक्लिष्ट-
कारिताशिष्टवर्णनान्विष्ट ॥ वीर ॥ ३६ ॥

कृत्वारिष्टं रिष्टं मुदितज्ञातिजवृतिश्रिया मुदितः ।
व्रजनं भुवि कुर्वन् स जयति जयकारवारसंपन्नः ॥३७॥

सुरारिहतिशंसनप्रथित कंसविध्वंसनः
सुधीभवहतौ विधिर्विविधकीर्तिभासां निधिः ।
विधिप्रभृतिवांछितं चरणलांछितं यस्य तद्
व्रजस्य निजवंशजः स्फुरतु नः स वंशप्रियः ॥३८॥

इति श्रीमज्जीवगोस्वामिविरचिता
श्रीगोपालबिरुदावली समाप्ता ।

# श्रीकृष्ण बिरुदावली ।

विज्ञायान्यदशर्म कर्मसकलं भूर्यन्तरायाकुलं
निर्णीतं निगमागमैश्च शरणं नामैकमात्रं कलौ ।
आविर्भूय पुनस्तदेव निखिलोद्धाराय योऽगापयद्
वन्दे तं करुणानिधिं प्रभुवरं चैतन्यचन्द्रं हरिम् ॥ १ ॥

राधे कोऽयमहं हरिर्व्रज वनं मुग्धेऽस्मि नारायणो
ग्राहः किंनु जनार्दनः सुवदने लोकार्दनान्मे भयम् ।
दुर्मेधे मधुसूदनः पिब गतः पद्मे मधून्योमिति
श्रीराधामुखचुंबनातिमुदितस्त्वां पातु नन्दात्मजः ॥ २ ॥

निरुपमगुणसीमैकान्तकान्तेर्निशान्तं
नतजननिखिलार्थोदारविस्तारकारि ।
स्फुरतु हृदि सदा मे तत्कृपालोककामे
त्रिभुवनजनवन्द्यं कृष्णपादारविन्दम् ॥ ३ ॥

या लीलास्तव शैशवेऽतिमधुरा या वा जगन्मण्डले
पौगण्डेऽसमकाण्डताण्डवरसस्याखण्डलाण्डेऽपि याः ।
कैशोरे करुणानिधे ! तव कृपालेशादशेषा इमा-
स्ता मे दुःखभरातुरे हृदि शमायाशु क्रियासुः पदम् ॥४॥

इयं मधुरलीलस्य कृष्णस्य बिरुदावली ।
तनुतां तत्पदस्थेमप्रेमैतच्छ्रुतिशालिनाम् ॥ ५ ॥

१। पुरुषोत्तमचण्डवृत्तम् ।

नमतोत्तमवेद्यममरव्रजमौलिस्रज-
ममृतोक्षितभाषस्मित मसिताञ्जनभागञ्जन-
घनसन्ततिदेहद्युतिमरुणाव्रणपद्मेक्षण
मनघस्मृत मिन्दोःशतमुखपंकज मतुलांगज-
लीलाश्रम मलकाभ्रम तिलकोद्यतभालं नत-
हृदयंगममेतं नुमः ॥ धीर ॥ ६ ॥

गुणगणपारावारं सारं रमणीयतावतां जगति ।
हारं मधुरविहारं वपुरनुवारं मनः स्मरतात् ॥ ७ ॥

श्रितनन्दाङ्गण कलितोद्रिङ्गण कालियनर्तन गोधनवर्तन
मंजुगतिक्रम पुंजितविक्रम सज्जनसम्मत शं तनु सुस्मित ॥धीर

२। वर्धितम् ।

कीर्तिर्यस्य पदावनेजनसरित्त्रैलोक्यसंपावनी
यस्यांशांशफणी बिभर्ति धरणीं शक्तिर्यदि ख्यायते ।

ऐश्वर्यं च भवाब्जजप्रभृतयो यत्सेवया व्याकुलाः
सोऽयं वोऽवतु बल्लवीकरतलध्वानैर्नटन्नर्तकः ॥ ९ ॥

उत्तमशशधरपंकजभास्वर सस्मितमुखवरविस्मितसुस्वर ।
चंचलदलवरकुवलयविक्रम खंजननर्तनगंजिदृशिक्रम
उन्मदमधुकरसन्निकरोज्ज्वल निस्तुलशिखिदलसंवृतकुन्तल ।
भक्षितदविचयलक्षितलक्षण दर्पकदर्पदकुंजगृहक्षण ।
मण्डलमनुगतताण्डववर्धन वत्सकसहचर वत्सविमर्दन ।
कुण्डलिफणचयनिस्तुलदण्डन रंगिमपदयुगपंकजमण्डन ।
सज्जनशरणद दुर्जनवर्जन निन्द्यपुरन्दर यदुकुलनन्दन ।
दन्तयुगलहतसुन्दरकुन्दक गण्डयुगलरविकुण्डलयुग्मक ।
दैत्यकुलार्दन निर्जरपक्षक संगिपुरःसर वत्सकरक्षक ।
वक्षसि विलसितमण्डनरंजन निर्भररिपुकुलदंभविभंजन ।
विस्फुरदधरविडंबितपल्लव संततयुवतिकुलेष्टद वल्लभ ।
सन्दिश मम हृदि निजचरणद्वयमुद्धर पुरुदय मां चानुकंपय
॥ धीर ॥ १० ॥

येनापायि पयः सहासुभिरलं बक्याः सुलक्ष्मांघ्रिणा
येनाऽभाजि निरस्तवस्तु शकटं दैत्यश्च वात्याकृतिः ।
येनाऽमारि बकोऽप्यदारि मुखतो येनाघनामा क्षणा-
द्येनातारि विधेरहारि सुमदः पायादपायात् स वः ॥११॥

उद्दीप्तकौमार्य विस्फारितौदार्य
संप्राप्तशैथिल्यविस्तीर्णचापल्य
विख्यातसाद्गुण्य मां पाह्यलं धन्य ॥ धीर ॥ १२॥

३। सामान्यम् ।

स्निग्धाञ्जनाञ्जितविलोचनमञ्जनाभं
भालालकस्फुरितसत्तिलकं स्मितास्यम् ।

मात्रोपनीतनवनीतविवृद्धतृष्णं
कृष्णाभिधं किमपि धाम ममाविरास्ताम् ॥ १३ ॥

कृतशिशुलीलाहतरिपुवर्गः प्रकृतिसमीक्षात्रिभुवनसर्गः ।
कृतबकसहजस्तनभवपान स्तदुरसि लीलाकृतमृदुयान
स्तनुपदघातैः शकटनिपात स्तदनुविनाशिततृणचरदैत्यः ।
प्रकटितमृत्स्नाशनजगदंबः सदधरभासा विफलितबिंबः ।
क्व च मृदुजानुद्वयगतिरंगप्रबलयमद्रुद्वयकृतभंगः ।
क्व च दधिमंथस्वनकृतनृत्यः सहचरवर्गैः सह कृतकृत्यः ।
क्व च कुलयोषाजनविविधाज्ञाविरचनकारी त्रिभुवनहृज्ज्ञः ।
क्षणमृदुवाग्भिर्बहुसुखदानः श्रितजनतापत्रयभयहानः ।
शुकपिकनादैः कृतशिशुलीलः क्व च तरुवल्लीविरचितदोलः ।
सहचरलीलाश्रितजयभंगः क्व च भुजयुद्धाहितबहुरंगः ।
स्मररसजोषास्थिरपरिरंभः खरनखरैस्तत्क्षतकुचकुंभः ।
सुमधुरवंशीरवहृतचित्तव्रजतरुणीनामुपचितवित्त-
स्मरसमरान्तोदितमृदुहासस्तदुचितनानावलदुपहासः ।
सरसमनोज्ञप्रियतममूर्तिः स भवतु सर्वार्थविहितपूर्तिः ॥धीर॥

जंभारेः स्तंभहारी प्रलयजलधरोत्सृष्टवृष्टिप्रणष्टे-
गोष्ठं त्रात्वातिभीतव्रजवरतरुणीनिर्भरास्वंगरंगी ।
नन्दाद्यानन्दसन्दोहदमधुरतरस्मेरवक्त्रारविन्दो
गोविन्दः पातु लीलाकरतलविलसत्पर्वतः सर्वतो वः ॥१५॥

मुदिरद्युतिधर मदिरेक्षणवर ।
युवतीप्सितकर सुमतिप्रियतर ।
चरणं पुरुदय मम हृद्युपनय ॥ वीर ॥ १६ ॥

४। वीरभद्रः ।

विस्फारा गिरिगोधने दधिपयस्तेये रहोप्यस्थिरा
नन्दे संनमिताधरा व्रजवधूश्रेण्यानने मंथराः ।
क्रूराः केशिनि मेदुराः सहचरव्यूहेऽधिगोष्ठान्तरं
गोविन्दस्य दिशन्तु वः शमतुलं नानाविधा दृष्टयः ॥१७॥

स्निग्धश्यामांबुदरुचितनुवर दत्तानन्दस्मितलवसुमधुर ।
नन्दानन्दप्रकटनपटुतर मन्दोदन्तैर्विफलितमधुभर ।
प्रोद्यच्छीतद्युतिसमनखर साक्षात्कारस्मर इव तनुधर ।
मंजूदंचन्मदशिखिदलशिख नासासक्तोत्तममणिसुतिलक ।
बिंबारंभक्षतिकरसदधर मन्दान्दोलश्रुतियुगसुमकर ।
वत्सस्वच्छप्रचलितमणिसर शिञ्जन्मंजीररणितपदचर ।
विद्युद्विद्योतनरुचिसुवसन रंगोद्रिंगत्कटितटसुरसन ।
कर्णोदंचत्कुसुमितकिसलय पूर्णोदीर्णामृतकरसमुदय ।
बर्हिःशुष्मोच्चयरिपुसुदहन हर्यक्षोर्जस्वनपरविमथन ।
सर्पोद्दर्पप्रशमनविनटन वात्यादैत्योद्धतगतिविघटन ।
षण्डोद्दण्डप्रहरणसुचतुर रंगासंगप्रतिहतमधुमुर ।
स्थेमप्रेमव्रजजनमनसिज भक्तव्यक्तार्थदपदसरसिज ।
मय्यक्षय्यं स्वभजनमुपदिश चित्ते नित्यं प्रभुवर ! मम वस ॥धीर

कुसुमिततरुवृन्दोपान्तवृन्दावनान्त-
गृहमनु सुरसोद्यन्नीपमूलावलंबी ।
मुखरिततरवंशीशंसिता गोपगोपी-
गणगतिरतिसान्द्रः श्रीमुकुन्दोऽवतान्नः ॥ १९ ॥

मुरलीचुंबक नतभीलुंपक ।
तरुणीवंचक शमधीरंजक ।
जगतीसंश्रय मम चेतस्यय ॥ धीर ॥ २० ॥

५। समग्रः ।

आभीरीकुचचक्रवाकविरहोत्तापापहारी करे-
णानन्तानुचरानुसंगिजनताहृत्पंकजोल्लासकः ।
श्रीराधास्तनमेरुविभ्रमपरः श्रीमन्मुकुन्दाभिधो
भानुः सोऽनुशये गिरौ समुदियाद्भिन्दन्ममान्धन्तमः ॥२१॥

अनर्थखण्डन प्रकृष्टमण्डन प्रमत्ततर्जन प्रचण्डनर्दन
प्रबुद्धरंजन स्वदुःखभंजन प्रपन्नवर्धन प्रदुष्टवर्जन
व्रजाप्तरिंगण स्वगोत्रनन्दन प्रतप्तचंदन प्रयुक्तबंधन
स्वमर्त्यवंदन प्रकीर्णकीर्तन स्ववृत्तिवर्तन स्वसंगिहर्षण
प्रियत्ववर्षण प्रसन्नदर्शन स्मृतार्तिकर्षण स्मितास्यवीक्षणं
ममार्पय क्षणम् ॥ धीर ॥ २२ ॥

निष्काञ्चना काञ्चनभूषणोज्ज्वला
निरंजनाप्यञ्जनमंजुलाकृतिः ।
नराधिका राधिकयापि संगता
श्रिये तवास्तां मुरविद्विषस्तनुः ॥ २३ ॥

[ नगोपलीलोऽपि हि गोपलीलः
कलापकेशोऽप्यकलापकेशः ।
वने विहारोऽप्यवने विहारः
स पातु गोपीजनवल्लभो वः ॥ क ॥]

अघसंहारक नगसंधारक ।
भवनिस्तारक गुणविस्तारक ।
नवनीतप्रिय मम चेतस्यय ॥ धीर ॥ २४ ॥

६। अच्युतः ।

मणियुतकांचनमुद्रं निजमुन्निद्रं करांबुजं शौरे ।
क्षणमपि हृदि विनिधाय प्रशमय भवदावदाहं मे ॥२५॥

व्रजपुरवासः कृतशिशुरासः स्मरशतमूर्तिः श्रितरतिपूर्ति
स्त्रिभुवनहृज्ज्ञः प्रकृतिमनोज्ञः श्रुतगुणधामा प्रणयसुदामा ।
व्रजपुरनारी–गणगृहचारी दधिमथिताशी चटुलविलासी ।
मधुमुरकंस–प्रतिहतवंशः सुमधुरशंसश्चलदवतंसः
सुररिपुषण्ड– प्रहरणशौण्डः शतमखदंभ–प्रकरविडंबः ।
सदधरबिंब–स्मितकविलंबः करधृतशैल–स्तदपि सहेलः ।
प्रियतमयोषा–रतिपरितोषा–दतिविवशाङ्गः प्रसरदनङ्गः ।
सहचरसंघ–प्रणयतरंग–व्रजजलधीन्दु–र्बहुगुणसिंधुः ।
परिहृतदोषः पुरुरिपुरोषः प्रणतसजोषः स्थिरचरघोषः ।
श्रितपरिपोषः कनकविभूषस्त्वमतिकृपातः क्षणमपि नाथ
स्फुर हृदये मे क्षिप न हि कामे ॥ वीर ॥ २६ ॥

विभ्राजच्छातकुंभद्युतिभिरतिशयोद्दामकन्दर्पलीला–
लोलाभिः संवृतात्मा घन इव चपलालीभिराभीरिकाभिः ।
चुम्बैर्बिम्बाधराणां स्मरसमरसमुल्लासहासावलोकै
रासां रासप्रकाशप्रकटितमदनावेश ईशः स पायात् ॥२७॥

अध्यासितसुख दध्यासितमुख ।
पिच्छावृतशिख निष्पाटितबक ।
निस्तारितनत मां तारय हित ॥ धीर ॥ २८ ॥

७। उत्पलम् ।

करकिसलयमकृशं मेदुरपत्रालिशालिनं सरसम् ।
शिखिपुच्छाञ्चितशिखरं कमपि तमालं तमालंबे ॥२९॥

निर्जितदुर्जन वर्धितसज्जन कुण्डलिदण्डन पण्डितमण्डन ।
विक्रमिताक्रम संततविश्रम विद्रुमितेक्षण विश्रुतलक्षण ।
निर्जरपुष्कर-संचयभास्कर कुण्डलमण्डन दुर्मदखण्डन ।
दर्दुरतर्जन दुर्जयगर्जन संश्रितशर्मद संगिषु नर्मद ।
पश्य बहुस्तव मां करुणार्णव ॥ धीर ॥ ३० ॥

मदालसविलोचनं मदशिखण्डिपुच्छोज्ज्वलं
मदालिनिकरप्रभं समदचन्दनाचर्चितम् ।
मदोन्मुदितमानसं मदनकोटिशौटीर्यवन्
महस्तदहमाश्रये त्रिजगदेकसंमोहनम् ॥ ३१ ॥

गोकुलानन्द खेलितामन्द गोपिकानंग-निर्भरास्वंग ।
चापलोद्रिङ्ग शंकिमातङ्ग मानसादित्य पाहि मामेत्य ॥धीर॥३२॥

८। तुरङ्गः ।

चन्द्रावलीवदनचुम्बनजातमोदं
खेदं नयन्तमतुलं मनसा विशाखाम् ।
उन्मीलयन्तमनुगाक्षिसरोजलक्ष-
मक्षाश्रयं कुरु तमद्भुतकृष्णचन्द्रम् ॥ ३३ ॥

शंकरशतधृतिवन्दित चन्द्रकिरणपरिनन्दित ।
संचरदधरशुभस्मित विस्तृतहलधरविस्मित ।
संगतसहचरलक्षक दुस्तररिपुकुलतक्षक ।
मंजुलदधिचयभक्षक सन्नतसुरगणपक्षक ।
पर्वतवरभुजमण्डन षण्डदनुजपरिदण्डन ।
विस्तृतबकमुखवंचक शंकितशिशुगणकंचुक ।
संवृतभुजयुगकंकण झंकृत पदयुगरिंगण ।
चंदनघुसृणविघस्मर तुंबुरुविजयिकलस्वर ।

वंदितचरणपुरंजय नन्दितहृदयधनंजय ।
संततसकलरिपुञ्जय शं तनु मयि विपुलं जय ॥धीर॥३४॥

गुंजन्मधुकरपुंजे कुसुमितकुंजे प्रवालशय्यायाम् ।
राधासंगमहेतोः कृतसंकेतो हरिर्जयति ॥३५॥

जय चारुनाम निखिलाभिराम ।
कमनीयकाय भुवनाभिगाय ।
करुणानिकाय हृदयं ममाय ॥ धीर ॥ ३६ ॥

६। गुणरतिः ।

त्रिजगन्मानसहरणे गुरुतरमिह पश्यतोहरं मन्ये ।
सिद्धौषधमथवा ते मुरहर हसितं च भाषितं चेदम् ॥३७॥

कुवलीकृतनग सुबलीकृतखग मुरलीरवगत–खुरलीपरिहृत-
सुरभीगुरुभय तरुणीसुखचय पवनाशनमद–सुविनाशनपद ।
करुणाशय शत–वरुणालयमत तरुणायतभुज शरणागतगज ।
तडितीकृतपट विरथीकृतभट विधुरीकृतशठ परिशीलितवट ।
पशुपीसुनिकट ललितालककुल–वलितानन किल शलभायितखल ।
महितातुलकल मधुगीतिगमुख विपुलीकृतसुख मथिताशनपर ।
वनितारतिकर निजनाशितभय सुखदायक जय ॥ धीर ॥ ३८ ॥

मेदुरमुदिरमनोज्ञे निखिलजीवजातानाम् ।
तरुणीमानसचोरे नन्दकिशोरे मनो रमताम् ॥ ३९ ॥

बर्हदलोज्ज्वल कुंचितकुन्तल ।
पर्वतकंदरविक्रम सुन्दर ।
संनतसदय मामनुकंपय ॥ वीर ॥ ४० ॥

१०। मातंगखेलितम् ।

रविदुहितृतटान्ते कान्तवृन्दावनान्त-
व्रजवरतरुणीनां धैर्यसेतुप्रमाथी ।
प्रणयजलधिराधालानतत्प्रेमबंधः
सजलजलदसान्द्रः कोऽपि जीयात् करीन्द्रः ॥ ४१ ॥

नीरदाकंद गोकुलानंद राधिकामंदमाधुरीगंध-
सारसारंग हापितातंक गोपिकाभाण्डभेदनाखण्ड-
बोधरूपांग नीरजापांग मोचितावद्य भाषितावेद्य ।
दूषणापोह्य दासतावाह्य सत्कथासाद्य मानसाराध्य ।
हेलयागध्र कालितासद्ध्रचगङ्गनारंगदायकानंग ।
नष्टमातंग पीडितोरंग सज्जनासंग पाहि मामंग ॥धीर॥४२॥

मुखरितमोहनवंशे बर्होत्तंसेऽतिमोहनेऽस्माकम् ।
दमितपदानतशमने राधारमणे मनो रमताम् ॥४३॥

इन्दुवदन कुंदरदन ।
पिंगवसन संगिहसन ।
भृत्यसुवश मय्यनुवस ॥ धीर ॥ ४४ ॥

११। तिलकम् ।

वत्सकचारणदक्षे भक्षितनवनीतलक्षणे चेतः ।
शैशवलीलासदने सति विधुवदनेऽन्यदीहसे मूढ ॥४५॥

नटनपटिमगतिखण्डितफणिमद सुकमलरुचिहृतिपण्डितमृदुपद ।
नवजलधररुचिगंजनतनुवर मसृणघुसृणपरिचर्चनसुमधुर ।
नवशिखिदलकुलवेष्टनकचचय पशुपयुवतिकृतमण्डलधृतलय ।
गृहपरिसरगतभक्षितदधिचय परिजनशिशुगणनिश्चयनिर्भय ।

संहृतदितिदनुजन्मसुसंमद मृदुमधुरस्मितसुन्दरतररद ।
निरवधिनिजजनविस्तृतबहुसुख गिरिवरविधरणधिक्कृतशतमख ।
चरणकमलपरिमण्डनफणिफण पशुपयुवतिगणसंचितबहुधन ।
मधुमधुरिमभरनिन्दकसुकथन लवमवकलय न मां किमु सुवदन
॥ धीर ॥ ४६ ॥

श्रुत्वा वेणुरवं ते दनुजाः कुलजाश्च कंपसंपन्नाः ।
हित्वा शरणं शरणं विषमास्त्रभयात् समीयुस्त्वाम् ॥४७॥

चंद्रकमण्डित नर्तनपण्डित ।
दुर्जनमर्दक सज्जनवर्धक ।
शं मयि संतनु विस्फुर हृदनु ॥ धीर ॥ ४८ ॥

१२। चण्डवृत्तस्य विशिखे पंकेरुहम् ।

उत्तमवंशोत्पन्ना स्वीकृतसंनागरा पुरंध्रीव ।
मधुरालापा वंशी कृष्णाधरदंशिनी जयति ॥४९॥

जय जय नंदप्रणयसुकंद त्रिभुवनवंद्य स्मितजितकुंद ।
प्रथितसुवंकध्वनिगतिरंग प्रसरदनंगप्रयुवतिसंग ।
प्रतिवनकुंजालयनवगुंजा–प्रथनविदग्ध प्रमदसुदिग्ध ।
त्रसितकुरंगीदृशिषु तरंगी प्रतिपदभंगीक्रमवलनांगी–
कृतबहुसंगीतकततिरंगी त्वं सुरसंघार्दनदतुरंगा–
र्पितभुजरिंगा श्रितपदगंगा–क्षतजगदंघाः प्रणय मदंगं
तव जनसंगम् ॥ धीर ॥ ५० ॥

मधुनि विधौ घनसारे न भवति किं माधुरीधुरीणत्वम् ।
कृष्णपदांबुजयुगले भिन्नैव विराजते रीतिः ॥५१॥

मधुरिमसंगत संगतजनवश युवतिविलंबित-लंबितभुजयुग ।
मदनरसाञ्जित साञ्जितसुनयन नयनान्तरमय रमयत मां त्वयि ॥धीर॥

१३। इन्दीवरः ।

पारीन्द्रः पशुपालवारिजदृशां मानद्विपोन्माथने
विश्वैनःकुलतूलदावदहनो वन्यासु पुष्पाकरः ।
मंत्रः कोऽपि जगद्वशीकरणकृद्दैत्यव्रजोच्चाटनं
सोऽयं कर्णपुटेऽनिशं वसतु मे कृष्णस्य वंशीरवः॥५३॥

जय जय कृष्ण प्रयुवतितृष्ण श्रुतगुणधिष्ण्य प्रणमदनुष्ण । प्रखलसमुष्ण द्विषदतिरुष्ट त्रिभुवनघुष्ट स्मररसपुष्ट । त्रिजगदभीष्ट स्वजनसुतुष्ट श्रितशुभदिष्ट श्रमिभिरदृष्ट-प्रपद वशिष्ठप्रमुखकनिष्ठ स्थिरचरजुष्ट स्मितलवदन्ता-तुलसुखकंद त्रिवलिसुतुंद व्रजगतचंद्र त्रिभुवनवंद्य । प्रणयसुबंध प्रतिपदमम्बार्थितगततंद्राम्बरविधुनिंदा-र्जकमुखचंद्रा व्रणतनुकुंदार्भकरद सान्द्राम्बुदचयवंद्या-ञ्जनभ सुनंदा दिभिरभिनंद्या क्षत नवकंजाक्षियुगल गुंजा-वृतकच मंज्वाक्षरगदिखंजार्चितमधुपुंजाश्रयतरुकुंजालय जय ॥ धीर ॥ ५४ ॥

ध्वजारिकुलिशांकुशादिभिरशेषसल्लक्षणै-
र्विलक्षितमनुक्षणं परमहंससंसेवितम् ।
व्रजैणनयनावलद्विरहतापनिर्वापकं
बकारिपदपंकजं सरसि मानसे भातु नः ॥ ५५ ॥

शंकरशतधृतिनतिनुतिलक्षक दुस्तररणभुवि रिपुकुलतक्षक । कुंचितसदलकतिलकसमर्चित रंगिमसदधररुचिरतरस्मित । निर्मलशशधरवदनमुदचय मां तव मुरहर ! चरणतलं नय ॥धीर॥५६

१४। अरुणांभोरुहम् ।

अंघ्रिविधुं विधुशिखरं पीतांबरमनिशवंशिकागीतम् ।
यामुनविपिने चित्रं सुरतरुवरमाश्रये कमपि ॥५७॥

जय विधुबिंबार्चितमुख बिंबाधर वलदंबाप्रणयविलंबा-
तुलपरिरंभाम्बुदनिकुरंबाङ्कक चिरजंभा हितमुखभंगिन्
अनुचरसंगिन्नटवररंगिन् पशुपकुरंगीदृशि दृशि भंगी-
पथचर भृंगीरुतकुतुकांगीकृततरुकंपाऽम्बुनि कृतझंपा
दरनुतचंपा स्रजि बहुगुंफा हितरुतडंफाऽरिनिवहलुंपा
ऽतनुरसपूर्णा तुलमदघूर्णाभ्रम समकर्णश्रितनवपर्ण ।
प्रमदकदंबं हर मम दंभं त्रिभुवनवंद्यं तनु पदगंधम् ।। वीर ।।५८।।

स्मरशतमपि कान्त्या निर्भरं भर्त्सयन्ती
विधुमपि विधुरत्वं प्रापयन्ती मुखेन ।
जगदतिसुखसिंधौ मज्जयन्ती ममान्त-
स्तनुरियमघशत्रोः सन्निधिः सन्निधत्ताम् ।। ५९ ।।

जंभहरणमदभंजन कुन्दमुकुलरदरंजन ।
पिंगलवसन सुलक्षण मंजुलकथन सुदक्षिण ।
पंचविशिखरसदर्पित संवस मम हृदि तर्पित ।। धीर ।। ६०।।

१५। कह्लारम् ।

न कल्याणी वाणी जलदपटले कान्तिकथनी
समाशंके पंकेरुहि नयनयोस्तस्य तुलया ।
तदंगस्यानंगः सम इति च बालप्रलपनं
मनस्तस्मात् कृष्णेऽनुपमरुचिधिष्ण्ये निविशताम् ।।६१।।

व्रजवरकन्यारतिरसपण्यार्पितमतिधन्यानुसमयवन्या-
कुसुमितवल्लीतातिनवमल्लीगृहचलचिल्लीयुवतीमतल्ली-
खरतरभल्लीकृतदृशिसल्लील सुसखिवृन्दान्वितचिरवंदा-
रुकवरवृन्दारकनुत नंदार्पितमतिमंत्रागणितसुकुंदा-
तुलमकरंदाशुगततगंधाश्रयमधुवृन्दावनचर कान्ता-

कुलसुखसंतानक धृतमंथान मथितदन्तावलवरदन्ता-
बलभुज कुन्ताकृतिनयनान्तातनुकृतसंतापयुवतिचन्द्र ।
प्रमुदिरसान्द्र प्रचुरमरन्दप्रतितनुगंध त्रिभुवनकान्तम् ।
प्रपदयुगान्तं मां समदान्तं नय कुरु शान्तम् ॥धीर॥६२॥

बर्हावतंसवरवंशपिशंगवासः-
केयूरहारवलयादिभिरुज्ज्वलाङ्गः ।
पूर्णामृतद्युतिमुखः सुखदानुशंसी
वंशीधरो मम निरंतरमंतरास्ताम् ॥६३॥

[ मधुररासरसशीले नीलेन्दीवरवराक्षिरमणीभिः ।
भास्वत्यपि शतखमणौ राधारमणे मनो रमताम् ॥६३ क]

संगतगोपीरतिभरसुललित भंगिमसंगिप्रतिपदविलसित ।
चंद्रकिपुच्छोद्धृतवरकचधर पल्लवगुंजाफलरुचितनुवर ।
बल्लववेषाकृतिमनसिजसम संनतिरेषा त्वयि निवसतु मम
॥ धीर ॥ ६४ ॥

१६। चंपकम् ।

चित्तोद्रिक्तमदान्धवारणवशीकारातिसारांकुशः
संसारत्रिविधज्वरापहरणे निर्व्याजदिव्यौषधिः ।
पापोत्थापनकर्मणि त्रिजगतां गंगातरंगावलि-
र्नित्यं माधव ! तावकोज्ज्वलकथा मत्कर्णमालंबताम् ॥६५॥

उज्ज्वल तरुण निर्भरकरुण निस्तुलशरण दुःस्थितिहरण ।
पन्नगदरण सन्नगधरण संचितकुसुमपुंजितसुषम ।
नन्दितकरण वंदितचरण संचलदलक निर्मलतिलक ।
तर्णकसदय पर्णकनिचयकुंजगशायन कज्जलनयन ।

सद्गुणसदन मौक्तिकरदन दुर्जनकदन सद्घननदन ।
मंगलहसन पिंगलवसन सन्नट सुलय संगतवलय ।
संमुखमयतु सुन्दर जयतु ॥ धीर ॥ ६६ ॥

अमृतचयैरिव भरितं तनुधरमिव गोपिकातुलप्रेम ।
कलय मुखं मुरशत्रोर्यद् विधुशतमप्यधो नयति ॥६७॥

चंचदलिपुंजमंजुतरकुंजनित्यकृतसंग नृत्यविधिरंग ।
चित्तमनु मेऽद्य विस्फुरतु हृद्य ॥ धीर ॥ ६८ ॥

१७। वंजुलम् ।

मधुरमनोहरहास्ये दास्ये यस्याब्जजादयः प्रणताः ।
कालियफणिफणनमने राधारमणे मनो रमताम् ॥६९॥

[ अरुणायितपादकरं पदकरंजितसुवक्षसं कमपि ।
तनुजितजलधरपटलं पटलंघितकुंकुमद्युतिं नौमि ॥ क ]

जय यदुनंदन नमितसनंदन कृतबलिबंधन रिपुकुलरंधन ।
नयनयुगांजनमदिरविगंजन कलितसदंजनतनुजनरंजन ।
पशुपपुरंदर मनसिजसुन्दर रतिरसदर्पितयुवतिजनार्पित-
नखततिलक्षण वलदलसेक्षण सुरगणमण्डन रिपुकुलदण्डन ।
विधिगिरिशाञ्चित प्रणयिसुसंचितबहुधन सन्नय पदयुगमुन्नय ।
मयि दृशिमञ्चय न हि परिवञ्चय ॥ धीर ॥ ७० ॥

बल्लवपुंगवराजं पुंगवराजातिसंगरे कुतुकम् ।
त्रिजगन्नुतमहिमानं तु तमहिमानविकर्षणं कलय ॥७१॥

[ वृन्दावननिजधिष्ण्ये विहरणतृष्णे विलासिनीनिकरैः ।
प्रणतविपद्गणधमने राधारमणे मनो रमताम् ॥ क ]

त्वं रतिरंगी सरसतरांगी ।
मनसिजसंगीतक मामङ्गीकुरु जय ॥ धीर ॥ ७२ ॥

१८। कुन्दम् ।

संस्मर संस्मरमूर्ते मामिह संसारसागरे मग्नम् ।
न त्यज नय चरणान्ते स्फुरति रणान्ते फणान्तरे फणिनः ॥७३॥

मंजु मुखवंश बर्हसुवतंस नंदसुखशंस हंत हतकंस ।
संगिजनसंग धन्यरतिरंग शक्रमदभंग पूज्यतरगंग ।
पन्नगसुनृत्य शुद्धबहुकृत्य विज्ञजनहृद्य वर्ण्यतरपद्य ।
कुंदसमदंत वक्त्रहतचंद्र शत्रुवधदक्ष मिष्टदधिभक्ष ।
शिष्टजनपक्ष भृत्यसुरलक्ष तीव्ररिपुरुक्ष नम्रजनसख्य ।
दुष्टजनचण्ड पुष्टकरिशुण्डतुल्यभुजदण्ड खर्वबलषण्ड ।
धर्मकृतिपण्ड नर्मरसकुण्ड चित्तमधितिष्ठ कृष्ण जगदिष्ट
॥ वीर ॥ ७४ ॥

नंदयशोदाभागं वलदनुरागं सदैव राधायाः ।
रंजितकुसुमपरागं पाणितलाङ्कं भजे कमपि ॥७५॥

उद्दीप्ततारुण्यविस्फार संगीतपीयूषविस्तार ।
सत्कुंदसौरभ्यनिश्वास सद्भक्तलोकैकविश्वास ।
सौन्दर्यसिंधूरुदुष्पार मच्चित्तमानंदरूपार ॥ धीर ॥ ७६ ॥

१९। बकुलभासुरम् ।

श्रीरंग तेऽतिमसृणो घुसृणाङ्गरागो
रागं सदांग जनयेन्नहि तत्र चित्रम् ।
चित्रं तदेव यदियं वरवंशजाता
वंशी लुनाति कुलजाकुलधैर्यवंशम् ॥ ७७ ॥

जय जय गोपीरतिपरमाश्रय माश्रय वंशीकलरवसुमधुर ।
मधुरणपण्डित विबुधसभाजित भाजितकाम जगज्जनकीर्तित ।
कीर्तितरातिभरितजगदण्डक दण्डकरद्विपजीवितहारक ।
हारकनकमणिरुचिधरविग्रह विग्रहलवकृतारिविनिग्रह ।
निग्रहनिहतममाहमसद्ग्रह सद्ग्रहगतिकृतपदसन्दर्शन ।
दर्शननुत सुखसंततिकारक कारकसप्तक जलधरमेचक ।
मे चकमे हृत्तोंघ्रि सुतिलक तिलकपुष्पसमनासासुवदन ।
वदनमुष्टजनान्यकरणार्थक णार्थकरूप निगमगणगोचर ।
गोचरणानुग पटिमधराधिक राधिकयातिरभसतरमानस ।
मानसमर्पणकरसाह्वय साह्वयगर्जनहतवृषभासुर ।
भासुरपशुपवधूजनरंगद रंगदलितभटदुर्मदसंभव ।
संभवदरुणपदं प्रति मां नय ॥ धीर ॥ ७८ ॥

कुण्डल्युद्दण्डमुण्डावलिदलनविधौ ताण्डवे पण्डितं श्री-
शौरेः षण्डातिदण्डप्रणयनबलभृच्चण्डदोर्दण्डयुग्मम् ।
श्रीखण्डावृत्तपुण्ड्रं खरकरविलसत्कुण्डलामण्डिगण्डं
पौगण्डं केलिभाण्डं क्षपयतु मम तत्कर्मकाण्डे वितण्डाम् ॥

सुसखिशतसंग मधुरनृतिरंग ।
मदनरसजुष्ट युवतिरतितुष्ट ।
नवघनसदंग हृदयमय मेऽङ्ग ॥ धीर ॥ ८० ॥

२०। बकुलमङ्गलम् ।

राधालिंगनदक्षः प्रतिभटकक्षप्रचण्डदावाग्निः ।
गिरिवरधारणशौण्डः स बाहुदण्डो हरेर्जयति ॥८१॥

जय जननंदन नंदनयाश्रित हे घनकंदल कंदलखेलन ।
प्रेमरसाश्रय साश्रयवत्सल मंजुलसत्पद सत्पददायक ।

लोचनखंजन खंजनवांबुद-नीलिमभास्वर भास्वरवंदित ।
दुर्जनवारण वारणविक्रम सत्कुसुमार्चित मार्चितपादुक ।
तापनिवर्तन वर्तनकारण मंजुदृगञ्जित गञ्जितकुवलय ।
सत्पटकांचन कांचनभूषण भक्तसुतारक तारकपत्रक ।
संनतशंकर शंकरपूजित वत्सकमारक मारकताप्रिय ।
संगिपुरोहित रोहितलोचन शं तनु मे हित मेहितदायक ।।धीर।।

लसत्कुसुममालया घुसृणमालया चर्चितं
वरैर्मणिसरैरपि ग्रथितकौस्तुभैरुज्ज्वलम् ।
व्रजैणनयनामनोहरणचौरधौरेयकं
पुरोहितमुरो मम स्फुरतु गोपचूडामणेः ।।८३।।

प्रणतसुखदमधुरचरण निखिलकुशलनिवहशरण ।
भजनरसिकशमितशमन रिपुकुलमदविपुलदमन ।
नवकिशलयमृदुलचरण मयि मयि दिश कमलनयन ।।वीर।।८४।।

२१। मंजर्यां कोरकः ।

चौर्याशितनवनीतं सततमभीतं सुधायनाहसितम् ।
पीतांबरपरिवीतं वंशीगीतं भजे कमपि ।।८५।।

गोपवधूजनमोहनखेलन शत्रुसमूहसुतापदहेलन ।
देवलोकगतकीर्तिसभाजित चण्डकरोज्ज्वलबाहुविराजित ।
चंचलवीक्षितविस्तृतलोचन चंद्रकरस्मितततापविमोचन ।
पर्वतधारणवर्धितगौरव दैत्यकुलातुलदर्शितरौरव ।
मंजुशिखण्डकसंवृतशेखर कुंजसुशीलितयामुनशीकर ।
भंगुररिंगणनृत्यमनोहर पीनकटीपरिपीतधटीवर ।
शत्रुगरिष्ठमदोन्नतिहारक वत्सवृषासुरधेनुकमारक ।
दुष्टबकातुलतुण्डविदारक संगिगणोत्थितदुःखनिवारक ।

चंद्रविनिन्दकचारुमुखांबुज कुंजरशुण्डसदृक्षलसद्भुज ।
बिंबफलद्युतिचारुतराधर वल्गितकुण्डलगण्डसुपिंजर ।
चित्रमहोत्सवदायिवरक्रम सिंहपराभवकारिपराक्रम ।
हन्त ! कृपामय मामवलोकय दुःखचयांबुनिधिं परिशोषय
॥ धीर ॥ ८६ ॥

निद्राकलंकनिजदोषनिसूदनाय त्वां दूषणक्षपणमीयतुरंबुजेन्दू ।
दृष्ट्वा तयोस्तव पदाश्रयलब्धदिष्टमिष्टाश्रिते मयि च किं न तथा तनोषि ॥

गर्वितदानवविस्तृततानव मंजुरसातुलनन्दितगोकुल ।
मंजुलसूदयगानमुदीरय कर्णयुगेर्पय तन्मम सद्दय ॥वीर॥८८॥

२२। गुच्छः ।

चूडेयं वरशाखिका प्रविलसद्भ्रूः कार्मुकं दृष्टयः
कुन्ताः सन्ततमुत्करौ च मकरौ गण्डाल्लसत्कुण्डले ।
एतैरेव परिच्छदैः प्रविदितः प्रोद्दामरागोऽधरः
पीयूषं मुरलीरवेण तनुते कृष्णस्य कोऽयं क्रमः ॥८९॥

जय मदनमाधुरीनिकरहर सुन्दर ।
स्फुटमधुरवंशिकाध्वनिनमितकन्धर ।
व्रजतरुणकामिनीमदनमदखण्डन ।
स्तुतशिखिदलांचितप्रचुरकचमण्डल ।
स्फुरितघनसंचयाञ्जननिवहमेचक ।
प्रणतजनदुस्तरप्रभवभयमोचक ।
प्रचुरसुखदायकारुणचरणपल्लव ।
स्मितमधुरभाषया भुवनजनवल्लभ ।
प्रबलखलदंभहृत्प्रवरभुजपन्नग ।
स्वजनपरिपालने करकलितसन्नग ।

त्रिदशकुलरक्षया विदितनिजवैभव ।
श्रितचरणपंकजप्रहतपुनरुद्भव ।
प्रणट पटुनर्तनोद्धुरगरिममण्डन ।
प्रथितगतिलीलया द्विरदमदखण्डन ।
श्रमजनितशोभया व्रजगमनरंग तम् ।
क्षणमपितु नाथ हे कलय पथि मा नतम् ॥ धीर ॥ ९० ॥

पद्मं करांघ्रि फणवान्नवलोमराजि-
र्वक्त्रं विधुर्भ्रमरका भ्रमितालकास्ते ।
मुक्ता रदा इति पवर्गमयी मुरारे-
र्मूर्तिस्तथापि भजतामपवर्गदात्री ॥९१॥

[अजनमोहचरितं जनमोहनं भवनुतं बहु तथाप्यभवेडितम् ।
अधरशोभिवदनं धरशोभिनं त्वमिह यामि शरणं व्रजसुन्दर ॥९१ क]

नन्दप्रियतर मन्दस्मितवर संमारितखर सन्धारितधर ।
विस्फूर्जितरस सन्तर्पणवश विस्तारितनय चित्तोपरि जय ॥वीर॥९२॥

२३। कुसुमम् ।

वंशीस्वनेन यमुनोपवनं प्रणीय
कुंजेषु गुंजदलिपुंजसुमंजुलेषु ।
चंद्रावलीविमलचंद्रमुखं सुखेन
चंद्रे समुन्नमति चुंबति कृष्णचंद्रः ॥९३॥

अमितमहिम जगति विदित निखिलसुखदमधुरचरित ।
शिखिदलयुतचिकुरवलन कुसुमदशन कमलनयन ।
दितिजदनुजनिवहकदन निखिलसुगुणसरससदन ।
मदननिवहहसनचरण दुरवगतिषु परमकरुण ।
सुररिपुकुलमुकुटदलन मदकरिकरसुभुजवलन ।

कटितटगतकपिशवसन　विलसदनिशमुखररसन ।
निखिलपशुपयुवतिमदन　सुविधुशतकमधुरवदन ।
भुवनविजयियशसि　गणन　मधुजलनिधिमृदुलकथन ।
मृगमदयुतघुसृणतिलक　मधुकरततिसचलदलक ।
रहसि विहृतयुवतिवसन मधुरवचनमयि मयि भण ॥धीर॥९४॥

यामुनकुंजकुटीरे　त्यक्तेतरविषयवासने　तस्मिन् ।
राधाध्याननिविष्टे　मुनिषु　महिष्ठे　दृशिर्लगतु ॥९५॥

मधुरक्रमलीलाश्रम　दनुजोद्धतदंभक्षत ।
मृदुलोत्तरदत्तोत्सव　नतनिस्तुलरंगोद्भव ।
शरणं भव शिष्टाश्रय मम सद्गुण चित्तोऽव्यय ॥वीर॥९६॥

२४। दण्डकत्रिभङ्गी ।

उन्नीताद्रितले　समस्तजनतासंमर्दकोलाहलं
दृष्ट्वा राधिकया विसर्जितह्रिया सानंदमालिंगितः ।
स्वेदोत्कंपतया विशंकितजनानुल्लासयन् प्रौढिभिः
साकूतस्मितवीक्षणं च सुदृशां पायात् स नो माधवः ॥९७॥

जगदतुलमहिम्नो महिष्ठं गरिष्ठं वरिष्ठं तवेष्टं
भजे　सुप्रतिष्ठं　मृदिष्ठं　तनिष्ठं　पदम् ।
त्रिजगदघतरोः　सुधारं　कुठारं　नितान्तप्रहारं
विदारं　विचारं　प्रपारं　विदूरं　धियाम् ।
निखिलगुणगणाभिरामे　निकामेऽरिभामे
नय　श्रीललामे　मनो　मे　सुरारिप्रहारे ।
हरे　व्यालदारे　प्रतिष्ठां　त्वयीष्ठे
गिरिवरदरीनिषण्णं　प्रसन्नं　त्वदंघ्रिद्वयं　मे ।
निधायोत्तमाङ्गे　कुरु　त्वं　कृतार्थं
शरणमुपगतोऽस्म्यजेशं　व्रजेशं　प्रजेशम् ।

महेशं मृतेशं जलेशं तलेशं सरोषं सुरेशं
पदान्तेऽनयद् यस्तमेतम् ॥ धीर ॥ ९८ ॥

तापत्रयभयकर्तनहसितमसितमुदिरभाधरं कमपि ।
मवनवनीतसदंगं तनुवदनंगं व्रजे व्रजे शरणम् ॥९९॥

गोपसख दुष्टबकहारिकरशैलधर ।
दासदय मा कलय ॥ धीर ॥ १०० ॥

२५। विदग्धत्रिभङ्गी ।

संसाराम्बुधिमग्नं कामादिग्राहदष्टमतिक्लिष्टम् ।
मामुद्धर गजराजं दुर्मतिभाजं कृपादृष्ट्या ॥१०१॥

नंदीकृतकुल संदीपितबल मंदीकृतखल सुन्दरसुन्दर ।
चूर्णीकृतबक पूर्णीकृतसुख कर्णीकृतनवपल्लववल्लभ ।
शान्तासितघनकान्ता खिलवनपान्थातुलगुण संतत सन्नुत ।
कुण्डायितजगदण्डाहितरुत पण्डान्वितसखिशर्मद नर्मद ।
विद्रावितशतसत्राश्रितमखसुत्रासितभयतर्जनगर्जन ।
अंबाहितदधिबिंबाधरवर जंबालकधरविग्रह सद्ग्रह ।
गुच्छायितशिखिपुच्छाञ्चितकच तुच्छायितपरचक्रपराक्रम ।
पूर्णामृतकर तूर्णाधृतधर कर्णान्तगनयनोज्ज्वलकज्जल ।
तुष्टाश्रयवर दुष्टाहितकर कष्टां गतिमिह नाशय माशय ।
कंजालय भव मंज्वाश्रय नव मां यापय नवपद्द्वयमद्वय
॥ धीर ॥ १०२ ॥

हारावासं वदनमनिशं पंकजालिप्तमंगं
पत्रावल्यः कटिविनिहिता लोचने कंकणालिः ।
नासासक्तांगुलिसमुचिता मुद्रिका श्रीमुरारे !
चित्रालोकि त्वदरिवनिताभूषणप्रक्रियेयम् ॥१०३॥

उद्यतसद्घनसंघवेष　चंद्रविराजितबद्धकेश
सज्जनमोहनभूरिगाय दुर्जनतर्जनचण्डकाय ।
निर्मलनिस्तुलचंद्रवक्त्र मां त्वनुकंपय केलिसक्त ॥धीर॥१०४॥

२३। मिश्रकलिका ।

मन्मथमखमधियूपः कुचघुसृणसमर्चितो व्रजस्त्रीणाम् ।
बाहुरलं मुरशत्रोः स भवतु मम चित्तवारणालानम् ॥१०५॥

दुष्टदुर्मदारिष्टचण्डभुजदण्ड विखण्डितदंभिदैत्यमद ।
नवीनांभोधरविडंबिकांतिसंचयोज्ज्वल ।
उद्दीप्तमदोद्दण्डषण्डविदण्डनखेलन ।
शिष्टार्जितसत्कर्मताविष्टचित्ता-
ष्टापदगञ्जिपिशंगावर　महिष्ठनीलशीलासदृशवक्षाः ।
सद्गुणकर दण्डितबलवदुरंगम सज्जनहृदयसुसंगम ।
मण्डिततरलदृगंचल　कुंचितविलुलितकुन्तल ।
दुर्जयदनुजविशोषक　संनतसुजनविपोषक ।
पण्डितसदसि　यशस्कर　खण्डितमतिजनदुष्कर ।
विस्फूर्जिताखण्डलधनुः खण्डमण्डलाकृतिताण्डविताशिखिशिखण्ड-
मण्डितोत्तंस वंजुलावतंस मंजुलशिंजानमणिमंजीर ।
भा-गंजितसिद्धांजनपुंज　कुंजगृहोद्दामविहारपर ।
कुंदविडंबितमंदतरस्मित चंद्रकचुंबितकुंतल । सुव्रत ।
कांतिकरंबितकुण्डलमण्डित मन्मथसुन्दर गोपपुरंदर ।
दुर्जनदैत्येन्द्रशतदुर्मदशुष्ककाननदाहोद्दामदावानल ।
सज्जनहृदयगह्वरनिबिडान्धकारनिर्भेदचण्डमार्तण्डचरणांभोज ।
निष्फलपार्वणशर्वरीशाडंबरविडंबकमुखमण्डल ।
दुष्टाहित परपुष्टारुत परितुष्टातुलधन जुष्टाखिलवन ।

सन्दीपितबल मंदीकृतखल कुंदीकृतरद पुंजीकृतमदमदर्वीकर-
वरखर्वीकृतगर निर्गतविस्मय मां प्रतिपालय ॥ धीर ॥ १०६ ॥

रात्रिन्दिवमुन्निद्रं नखरविधुराजिराजितं चित्रम् ।
समवतु मामतिविमलं तत्पदकमलं व्रजेन्द्रस्य ॥१०७॥

गोकुलमंगल सद्गुणसंकुल ।
दुर्गतसहृय मां न हि वंचय ॥ धीर ॥ १०८ ॥

अथ वा सार्वविभक्तिकी कलिका ।

पशुपवरपुरन्ध्रीलोचनेन्दीवराणां
स्मितविशदमयूखैः सन्ततोल्लासकारी ।
निरुपमसुखसिंधोरेधबंधुमुखेन्दु-
र्मनसि तदवगन्तुः केशिहन्तुर्ममास्ताम् ॥१०९॥

यः स्थिरकरणः प्रस्तुतचरणः संसृतिहरणः संनतशरणः ।
प्रशमितरोषं तं नतपोषं जलधरकान्तं नौमि नितान्तम् ।
नवजलधररुचिरेण हृदयमधिगतमचिरेण ।
प्रणतजनहृतभयेन निखिलजगति किल येन ।
यस्मै परिष्वंगरंगाय गोप्यश्चक्रुः स्पृहां
कुंजसद्माश्रिताय कंदर्पसंदर्भहृष्टाय
सत्कीर्तिजुष्टाय सल्लोकघुष्टाय सोऽव्यात् ।
समस्तार्थलंभाद्धतारिप्रदंभाद् यतो वैरिचक्रं रणेऽभूत् सुवक्रम् ।
यस्योन्नतांसस्य गुंजावतंसस्य वेणुमुखे वश्यमास्ते मनोज्ञस्य ।
स्मरविस्फुरिते त्रिजगन्महिते रतिरुज्ज्वलिते सुदृशां वलते ।
यस्मिन् जगतामतिशयमहिता पात्रं भवतात् स तु मम शरणम्
॥ धीर ॥ ११० ॥

दुर्वारं मेऽतिभारं दिशति करतले तन्वि ! गोवर्धनो यत्
　वत्से धत्से महीध्रद्वितयमिदमहो न श्रमस्ते तथापि ।
धृत्वा ज्ञेयं मयैतत् क्षणमिह सरसं पाणिमाधाय राधा–
　वक्षोजान्तर्नितान्तं रभसतरलितः पातु नंदात्मजो वः ॥१११

शर्मकथोदय नर्मरसाश्रय वेणुरवोद्धत संगतयौवत ।
　निर्गदमातनु मां तु कृपाल नु ॥ धीर ॥ ११२ ॥

२७। अक्षरमयी ।

तरलिततरलोद्यत्तारहारावलीभि–
　र्वलयितमतुलश्रीनीलशैलावभासम् ।
कुचघुसृणविलिप्तं गोपसीमन्तिनीनां
　क्षणमपि मम लक्ष्यं कृष्णवक्षः पुरः स्यात् ॥११३॥

अव्ययपद जय आर्तिहराह्वय इन्दुमुखोदय ईशकृपाश्रय
उत्पलविभ्रम ऊर्ध्वगविक्रम ऋद्धिदसत्कथ ॠभुकुलाक्षत
ऌतकयज्ञसख ॡवदनर्थक एणदृशोक्षित ऐन्द्रमदक्षत
ओजःपुंजक औपमनिन्दक अंशुभिरुज्ज्वल अ इव कुण्डल ।
कंजवरेक्षण खण्डलभक्षण गर्जितकुंजर घुसृणसुपिंजर
ङोकृतकलरुत चलितालकवृत च्छलितांबुजभव जलजोत्तमरव
झंकृतकंकण ञोकृतसुरसन टंकृतबहुसुख ठाकृतिविधुमुख
डिण्डिमघोषण ढक्कारवरण णार्थगतस्मय तरलदृशिद्वय
थुत्कृतकुवलय दीनजनाश्रय धरधृतिनिर्भय नवनीतप्रिय
पंकजलोचन फणिमदमोचन बकमुखदारण भवभयतारण
मंजुलमण्डन युधि रिपुखण्डन राधारंजन ललितदृगंजन
विकसितमुखवर शशधरसुन्दर षट्पदरुचिधर सरसमनोहर
　हलधरसहचर क्षपितमहीभर ॥ धीर ॥ ११४ ॥

कर्णे कंपितकर्णिकारकलिकः कंदर्पकेलिक्रिया-
कल्याकल्यविकल्पनातिकुतुकी कैशोरकालक्रमः।
किंचित् कुंचितकोमलालककुलः कादंबिनीकंदलः
कृष्णः केलिकलापकीलितकचः कं वः क्रियात् कामदः ॥११५॥

राधागुरुतर बाधाशतहर।
रंगाश्रितनट रंगाहृतपट।
नाथासुखशत मासूदय हित॥ धीर॥ ११६॥

२८। सर्वलघुः।

अमलकमलदलपदतलनयन
शतशतशशधरसमकरवदन।
हलधरसहचर नगवरधरण
भव मम शरणमलमभयदचरण॥ ११७॥

जय नतसनककमलभवभव।
वदनहतशशधरशत नटनघटनचरणवरचर।
कपटशयनहतशकट तरतरणिदुहितृतटविहृतयुवतिपट।
गतकुसुमितमठ कटिविनिहितघट हसितदितिजभट।
सहचरकृतहठ रतिपरिचितवट रिपुरणसुविकट।
कमलरुचिरकर शमलशतकहर सुविधुवदनधर।
किसलयसदधर कलितचिकुरभर नियतमुदिततर।
युवतिरमणवर मधुरहसनरस मम तु मनसि वस॥धीर॥११८

भाले मलयजतिलकं लोलालकपालिशीलितं परितः।
शमयतु मे भवतापं बिधुरिव रविजं मुरारातेः॥११९॥

मुखररसन कपिशवसन कुसुमदशन।
मधुरहसन भवतु शरणमयि सुवदन॥ वीर॥ १२०॥

भालालंबातिकंपत्तरुणशिखिदलारंभसंभाविता या
रूपोदग्रा समग्राभरणविरचिताध्यासिता पुष्पदाम्ना ।
भंगीसंगीकृतांगी हृदपहृतिगुरोर्गौरवं सम्यगूढा
चूडा मूढाभिमानं मुरहर हरतात्तावकी मामकीनम् ॥१२१॥

सुकुमारांगी विशदा सत्तमरूपानुसारिणी वाणी ।
अच्युतपदार्पितेयं कुसुमावलिमालिका जयति ॥१२२॥

इदं हरिगुणेहिताश्रितमशेषदोषापहं
मनःश्रवणमंगलं कुरुत कर्णयोर्मण्डनम् ।
मया विवृतमित्यलं त्यजत दोषदृष्टिं बुधा
जहाति किमु मक्षिकानिचितसारघं सारवित् ॥१२३॥

श्रीकृष्णबिरुदावलीयं श्रीकृष्णशरणोदिता ।
श्रीकृष्णचरणे भक्तिं शृण्वतां संविधास्यति ॥१२४॥

इति श्रीकृष्णशरणगोस्वामिविरचिता

श्रीकृष्णबिरुदावली समाप्ता ।

## श्रीमद्भागवतीय श्रीकृष्णस्तवाः ।

१। श्रीमद्भागवतोपक्रमोपसंहारयोः श्रीभगवत्स्तवः ।

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥

[१. १. १]

कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा
तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ।
योगीन्द्राय तदात्मनाथ भगवद्राताय कारुण्यत-
स्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥
[१२. १३. १९]

नाम सङ्कीर्तनं यस्य सर्वपापप्रणाशनम् ।
प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥ ३ ॥
[१२. १३. २३]

२। कुन्तीकृता श्रीकृष्णस्तुतिः । [१.८.१८–४३]

नमस्ये पुरुषं त्वाऽऽद्यमीश्वरं प्रकृतेः परम् ।
अलक्ष्यं सर्वभूतानामन्तर्बहिरवस्थितम् ॥

मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययम् ।
न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥

तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः ॥

कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥

नमः पङ्कजनाभाय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय नमस्ते पङ्कजांघ्रये ॥

यथा हृषीकेश खलेन देवकी कंसेन रुद्धातिचिरं शुचार्पिता ।
विमोचिताहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् ॥

विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः ।
मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥

विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो ।
भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥

जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् ।
नैवार्हत्यभिधातुं वै त्वामकिञ्चनगोचरम् ॥

नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये ।
आत्मारामाय शान्ताय कैवल्यपतये नमः ॥

मन्ये त्वां कालमीशानमनादिनिधनं विभुम् ।
समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ॥

न वेद कश्चिद्भगवंश्चिकीर्षितं
तवेहमानस्य नृणां विडम्बनम् ।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्
द्वेष्यश्च यस्मिन् विषमा मतिर्नृणाम् ॥

जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः ।
तिर्यङ्नृषिषु यादःसु तदत्यन्तविडम्बनम् ॥

गोप्याददे त्वयि कृतागसि दाम तावद्
याते दशाश्रुकलिलाञ्जनसंभ्रमाक्षम् ।
वक्त्रं निनीय भयभावनया स्थितस्य
सा मां विमोहयति भीरपि यद्बिभेति ॥

केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये ।
यदोः प्रियास्यान्ववाये मलयस्येव चन्दनम् ॥

अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥

भारावतारणायान्ये भुवो नाव इवोदधौ ।
सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः ॥

भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः ।
श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजम् ॥

अप्यद्य नस्त्वं स्वकृतेहित प्रभो
जिहाससि स्वित्सुहृदोऽनुजीविनः ।
येषां न चान्यद्भवतः पदाम्बुजात्
परायणं राजसु योजितांहसाम् ॥

के वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः ।
भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः ॥

नेयं शोभिष्यते तत्र यथेदानीं गदाधर ।
त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः ॥

इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः ।
वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षितैः ॥

अथ विश्वेश विश्वात्मन् विश्वमूर्ते स्वकेषु मे ।
स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु ॥

त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ।
रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति ॥

श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्
राजन्यवंशदहनानपवर्गवीर्य ।
गोविन्द गोद्विजसुरार्तिहरावतार
योगेश्वराखिलगुरो भगवन्नमस्ते ॥ २९ ॥

३। भीष्मनिर्याणावसरे तत्कृतः श्रीकृष्णस्तवः। [१.९.३२-४२]

इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि ।
स्वसुखमुपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥

त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने ।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ॥

युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलंकृतास्ये ।
मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥

सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य ।
स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ॥

व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या ।
कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥

स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः ।
धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः ॥

शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे ।
प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्दः ॥

विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये ।
भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः सरूपम् ॥

ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः ।
कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन् किल यस्य गोपवध्वः ॥

मुनिगणनृपवर्यसंकुलेऽन्तःसदसि युधिष्ठिरराजसूय एषाम् ।
अर्हणमुपपेद ईक्षणीयो मम दृशिगोचर एष आविरात्मा ॥

तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम् ।
प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः ॥४०॥

४। श्रीकृष्णस्य द्वारावतीविजये कौरवेन्द्रपुरस्त्रीणां संजल्पमयस्तवः ।

[१.१०. २१–३०]

स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि ।
अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मन्निशि सुप्तशक्तिषु ॥

स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रकृत् ॥

स वा अयं यत्पदमत्र सूरयो जितेन्द्रिया निर्जितमातरिश्वनः ।
पश्यन्ति भक्त्युत्कलितामलात्मना नन्वेष सत्त्वं परिमार्ष्टुमर्हति ॥

स वा अयं सख्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः ।
य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्र सज्जते ॥

यदा ह्यधर्मेण तमोधियो नृपा जीवन्ति तत्रैष हि सत्त्वतः किल ।
धत्ते भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगे युगे ॥

अहो अलं श्लाघ्यतमं यदोः कुलमहो अलं पुण्यतमं मधोर्वनम् ।
यदेष पुंसामृषभः श्रियः पतिः स्वजन्मना चंक्रमणेन चाञ्चति ॥

अहो बत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुवः ।
पश्यन्ति नित्यं यदनुग्रहेषितं स्मितावलोकं स्वपतिं स्म यत्प्रजाः ॥

नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः ।
पिबन्ति याः सख्यधरामृतं मुहुर्व्रजस्त्रियः संमुमुहुर्यदाशयाः ॥

या वीर्यशुल्केन हृताः स्वयंवरे प्रमथ्य चैद्यप्रमुखान् हि शुष्मिणः ।
प्रद्युम्नसाम्बाम्बसुतादयोऽपरा याश्चाहृता भौमवधे सहस्रशः ॥

एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं बत साधु कुर्वते ।
यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याहृतिभिर्हृदि स्पृशन् ॥५०॥

५। द्वारकाप्रवेशे तत्रत्य प्रजानां वासुदेवस्तुतिः । [१.११. ६–६]

नताः स्म ते नाथ सदांघ्रिपङ्कजं विरिञ्चवैरिञ्च्यसुरेन्द्रवन्दितम् ।
परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत्परः प्रभुः ॥
भवाय नस्त्वं भव विश्वभावन त्वमेव माताथ सुहृत्पतिः पिता ।
त्वं सद्गुरुर्नः परमं च दैवतं यस्यानुवृत्त्या कृतिनो बभूविम ॥
अहो सनाथा भवता स्म यद्वयं त्रैविष्टपानामपि दूरदर्शनम् ।
प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं तव सर्वसौभगम् ॥
यर्ह्यम्बुजाक्षापससार भो भवान् कुरून्मधून् वाथ सुहृद्दिदृक्षया ।
तत्राब्दकोटिप्रतिमः क्षणो भवेद् रविं विनाक्ष्णोरिव नस्तवाच्युत ॥५४

६। परीक्षितः प्रश्नानामुत्तरदानारंभे श्रीशुकदेवकृत मङ्गलाचरणम् ।
[२.४.१२–२४]

नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया ।
गृहीतशक्तित्रितयाय देहिनामन्तर्भवायानुपलक्ष्यवर्त्मने ॥
भूयो नमः सद्वृजिनच्छिदेऽसतामसंभवायाखिलसत्त्वमूर्तये ।
पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे ॥
नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ।
निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः ॥
यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः ॥
विचक्षणा यच्चरणोपसादनात् सङ्गं व्युदस्योभयतोऽन्तरात्मनः ।
विन्दन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः ॥
तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः ॥

किरातहूणान्ध्रपुलिन्दपुक्कसा आभीरकङ्का यवनाः खसादयः ।
येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥

स एष आत्माऽऽत्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः ।
गतव्यलीकैरजशङ्करादिभिर्वितर्क्यलिङ्गो भगवान् प्रसीदताम् ॥

श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्लोकपतिर्धरापतिः ।
पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान् सतां पतिः ॥

यदंघ्र्यनुध्यानसमाधिधौतया धियानुपश्यन्ति हि तत्त्वमात्मनः ।
वदन्ति चैतत्कवयो यथारुचं स मे मुकुन्दो भगवान् प्रसीदताम् ॥

प्रचोदिता येन पुरा सरस्वती वितन्वताजस्य सतीं स्मृतिं हृदि ।
स्वलक्षणा प्रादुरभूत् किलास्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥

भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ।
भुंक्ते गुणान् षोडश षोडशात्मकः सोऽलंकृषीष्ट भगवान् वचांसि मे ॥

नमस्तस्मै भगवते वासुदेवाय वेधसे ।
पपुर्ज्ञानमयं सौम्या यन्मुखाम्बुरुहासवम् ॥ ६७ ॥

७। वृत्रस्तुतिः । [६.११.२४–२७]

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक् कर्म करोतु कायः ॥

न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य कांक्षे ॥

अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥

ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्मायया्ऽऽत्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥७१॥

८। ब्रह्मादिदेवानां देवकीगर्भस्तुतिः । [१०.२.२६-४१]

सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये ।
सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥

एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा ।
सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥

त्वमेक एवास्य सतः प्रसूतिस्त्वं सन्निधानं त्वमनुग्रहश्च ।
त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये ॥

बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य ।
सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम् ॥

त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि समाधिनाऽऽवेशित चेतसैके ।
त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥

स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः ।
भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥

येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदंघ्रयः ॥

तथा न ते माधव तावकाः क्वचिद् भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः ।
त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ॥

सत्त्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेयउपायनं वपुः ।
वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते ॥

सत्त्वं न चेद् धातरिदं निजं भवेद् विज्ञानमज्ञानभिदापमार्जनम् ।
गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः ॥

न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः ।
मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि ॥

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते ।
क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते ॥

दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः ।
दिष्ट्याङ्किता त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकम्पिताम् ॥

न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ।
भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ॥

मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः ।
त्वं पासि नस्त्रिभुवनं च यथाधुनेश भारं भुवो हर यदूत्तम वन्दनं ते॥

दिष्ट्याम्ब ते कुक्षिगतः परः पुमानंशेन साक्षाद् भगवान् भवाय नः ।
मा भूद् भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः ॥८७॥

९। वसुदेवकृत वासुदेवस्तवः । [१०.३.१३–२२]

विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः ।
केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ॥

स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम् ।
तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥

यथेमेऽविकृता भावास्तथा ते विकृतैः सह ।
नानावीर्याः पृथग्भूता विराजं जनयन्ति हि ॥

सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव ।
प्रागेव विद्यमानत्वान्न तेषामिह सम्भवः ॥

एवं भवान् बुद्ध्यनुमेयलक्षणैर्ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः ।
अनावृतत्वाद् बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः ॥

य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः ।
विनानुवादं न च तन्मनीषितं सम्यग् यतस्त्यक्तमुपाददत् पुमान् ॥

त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो वदन्त्यनीहादगुणादविक्रियात्
त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः ॥
स त्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः ।
सर्गाय रक्तं रजसोपबृंहितं कृष्णं च वर्णं तमसा जनात्यये ॥
त्वमस्य लोकस्य विभो रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर ।
राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः ॥
अयं त्वसभ्यस्तव जन्म नौ गृहे श्रुत्वाग्रजांस्ते न्यवधीत् सुरेश्वर ।
स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाधुनैवाभिसरत्युदायुधः ॥९७॥

१०। देवकीकृता भगवत्स्तुतिः । [१०.३. २४–३१]

रूपं यत्तत् प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् ।
सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद् विष्णुरध्यात्मदीपः ॥
नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु ।
व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः ॥
योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम् ।
निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ॥
मर्त्यो मृत्युव्यालभीतः पलायन् लोकान् सर्वान् निर्भयं नाध्यगच्छत्
त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति ॥
स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान् भृत्यवित्रासहासि ।
रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥

जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ।
समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥
उपसंहर विश्वात्मन्नदो रूपमलौकिकम् ।
शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥

विश्वं यदेतत् स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् ।
बिभर्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडम्बनं हि तत् ॥१०५

११। यमलार्जुनरूपिणोर्नलकुबरमणिग्रीवयोः श्रीकृष्णस्तवः ।
[१०.१०.२९–३८]

कृष्ण कृष्ण महायोगिंस्त्वमाद्यः पुरुषः परः ।
व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥

त्वमेकः सर्वभूतानां देहास्वात्मेन्द्रियेश्वरः ।
त्वमेव कालो भगवान् विष्णुरव्यय ईश्वरः ॥

त्वं महान् प्रकृतिः सूक्ष्मा रजःसत्त्वतमोमयी ।
त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥

गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः ।
कोन्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृतः ॥

तस्मै तुभ्यं भगवते वासुदेवाय वेधसे ।
आत्मद्योतगुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥

यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः ।
तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसङ्गतैः ॥

स भवान् सर्वलोकस्य भवाय विभवाय च ।
अवतीर्णोंऽशभागेन साम्प्रतं पतिराशिषाम् ॥

नमः परमकल्याण नमः परममङ्गल ।
वासुदेवाय शान्ताय यदूनां पतये नमः ॥

अनुजानीहि नौ भूमंस्तवानुचरकिङ्करौ ।
दर्शनं नौ भगवत ऋषेरासीदनुग्रहात् ॥

वाणी गुणानुकथने श्रवणौ कथायां
हस्तौ च कर्मसु मनस्तव पादयोर्नः ।
स्मृत्यां शिरस्तव निवासजगत्प्रणामे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥११५॥

१२। ब्रह्मणः स्तुतिः । [१०.१४. १–४०]

नौमीड्य तेऽभ्रवपुषे तडिदम्बराय
गुञ्जावतंसपरिपिच्छलसन्मुखाय ।
वन्यस्रजे कवलवेत्रविषाणवेणु-
लक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय ॥
अस्यापि देव वपुषो मदनुग्रहस्य
स्वेच्छामयस्य न तु भूतमयस्य कोऽपि ।
नेशे महि त्ववसितुं मनसाऽऽन्तरेण
साक्षात्तवैव किमुतात्मसुखानुभूतेः ॥
ज्ञाने प्रयासमुदपास्य नमन्त एव
जीवन्ति सन्मुखरितां भवदीयवार्ताम् ।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभि-
र्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम् ॥
श्रेयःस्रुतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद् यथा स्थूलतुषावघातिनाम् ॥
पुरेह भूमन् बहवोऽपि योगिन-
स्त्वदर्पितेहा निजकर्मलब्धया ।

विबुध्य भक्त्यैव कथोपनीतया
प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥

तथापि भूमन् महिमागुणस्य ते
विबोद्धुमर्हत्यमलान्तरात्मभिः ।
अविक्रियात् स्वानुभवादरूपतो
ह्यनन्यबोध्यात्मतया न चान्यथा ॥

गुणात्मनस्तेऽपि गुणान् विमातुं
हितावतीर्णस्य क ईशिरेऽस्य ।
कालेन यैर्वा विमिताः सुकल्पै-
र्भूपांसवः खे मिहिका द्युभासः ॥

तत्तेऽनुकम्पां सुसमीक्षमाणो
भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते
जीवेत यो मुक्तिपदे स दायभाक् ॥

पश्येश मेऽनार्यमनन्त आद्ये
परात्मनि त्वय्यपि मायिमायिनि ।
मायां वितत्येक्षितुमात्मवैभवं
ह्यहं कियानैच्छमिवार्चिरग्नौ ॥

अतः क्षमस्वाच्युत मे रजोभुवो
ह्यजानतस्त्वत्पृथगीशमानिनः ।
अजावलेपान्धतमोऽन्धचक्षुष
एषोऽनुकम्प्यो मयि नाथवानिति ॥

काहं तमोमहदहंखचराग्निवार्भू-
संवेष्टिताण्डघटसप्तवितस्तिकायः ।

क्वेदृग्विधाविगणिताण्डपराणुचर्या-
वाताध्वरोमविवरस्य च ते महित्वम् ॥

उत्क्षेपणं गर्भगतस्य पादयोः
किं कल्पते मातुरधोक्षजागसे ।
किमस्तिनास्तिव्यपदेशभूषितं
तवास्ति कुक्षेः कियदप्यनन्तः ॥

जगत्त्रयान्तोदधिसम्प्लवोदे
नारायणस्योदरनाभिनालात् ।
विनिर्गतोऽजस्त्विति वाङ् न वै मृषा
किं त्वीश्वर त्वन्न विनिर्गतोऽस्मि ॥

नारायणस्त्वं न हि सर्वदेहिना-
मात्मास्यधीशाखिललोकसाक्षी ।
नारायणोऽङ्गं नरभूजलायना-
त्तच्चापि सत्यं न तवैव माया ॥

तच्चेज्जलस्थं तव सज्जगद्वपुः
किं मे न दृष्टं भगवंस्तदैव ।
किं वा सुदृष्टं हृदि मे तदैव
किं नो सपद्येव पुनर्व्यदर्शि ॥

अत्रैव मायाधमनावतारे ह्यस्य प्रपञ्चस्य बहिः स्फुटस्य ।
कृत्स्नस्य चान्तर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते ॥

यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा ।
तत्त्वय्यपीह तत् सर्वं किमिदं मायया विना ॥

अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शित-
मेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि ।

तावन्तोऽसि चतुर्भुजास्तदखिलैः साकं मयोपासिता-
स्तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते ॥

अजानतां त्वत्पदवीमनात्मन्यात्माऽऽत्मना भासि वितत्य मायाम् ।
सृष्टाविवाहं जगतो विधान इव त्वमेषोऽन्त इव त्रिनेत्रः ॥

सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादस्स्वपि तेऽजनस्य ।
जन्मासतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय च ॥

को वेत्ति भूमन् भगवन् परात्मन् योगेश्वरोतीर्भवतस्त्रिलोक्याम् ।
क वा कथं वा कति वा कदेति विस्तारयन् क्रीडसि योगमायाम् ॥

तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत् सदिवावभाति ॥

एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः ।
नित्य ऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥

एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते ।
गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरन्तीव भवानृताम्बुधिम् ॥

आत्मानमेवात्मतयाविजानतां तेनैव जातं निखिलं प्रपञ्चितम् ।
ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥

अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ।
अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥

त्वामात्मानं परं मत्वा परमात्मानमेव च ।
आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञता ॥

अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः ।
असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति सन्तः ॥

अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि ।
जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥

तदस्तु मे नाथ स भूरिभागो भवेऽत्र वान्यत्र तु वा तिरश्चाम् ।
येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम् ॥

अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा ।
यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः ॥

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥

एषां तु भाग्यमहिमाच्युत तावदास्ता-
मेकादशैव हि वयं बत भूरिभागाः ।
एतद्धृषीकचषकैरसकृत् पिबामः
शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते ॥

तद् भूरिभाग्यमिह जन्म किमप्यटव्यां
यद् गोकुलेऽपि कतमांघ्रिरजोऽभिषेकम् ।
यज्जीवितं तु निखिलं भगवान् मुकुन्द-
स्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥

एषां घोषनिवासिनामुत भवान् किं देव रातेति न-
श्चेतो विश्वफलात् फलं त्वदपरं कुत्राप्ययन् मुह्यति ।
सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता
यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥

तावद् रागादयः स्तेनास्तावत् कारागृहं गृहम् ।
तावन्मोहोऽङ्घ्रिनिगडो यावत् कृष्ण न ते जनाः ॥

प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले ।
प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो ॥

जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो ।
मनसो वपुषो वाचो वैभवं तव गोचरः ॥

अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक् ।
त्वमेव जगतां नाथो जगदेतत्तवार्पितम् ॥

श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन्
क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् ।
उद्धर्मशार्वरहर क्षितिराक्षसध्रुग्-
आकल्पमार्कमर्हन् भगवन् नमस्ते ॥१५५॥

१३। कालियदमनलीलायां नागपत्नीस्तवः । [१०.१६. ३३–५३]

न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय ।
रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवानुशंसन् ॥

अनुग्रहोऽयं भवतः कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः ।
यद् दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव सम्मतः ॥

तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन ।
धर्मोऽथवा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः ॥

कस्यानुभावोऽस्य न देव विद्महे तवांघ्रिरेणुस्पर्शाधिकारः ।
यद्वाञ्छया श्रीर्ललनाऽऽचरत्तपो विहाय कामान् सुचिरं धृतव्रता ॥

न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः ॥

तदेष नाथाप दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः ।
संसारचक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद् विभवः समक्षः ॥

नमस्तुभ्यं भगवते पुरुषाय महात्मने ।
भूतावासाय भूताय पराय परमात्मने ॥

ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये ।
अगुणायाविकाराय नमस्तेऽप्राकृताय च ॥

कालाय कालनाभाय कालावयवसाक्षिणे ।
विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥

भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने ।
त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये ॥

नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते ।
नानावादानुरोधाय वाच्यवाचकशक्तये ॥

नमः प्रमाणमूलाय कवये शास्त्रयोनये ।
प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥

नमः कृष्णाय रामाय वसुदेवसुताय च ।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥

नमो गुणप्रदीपाय गुणात्मच्छादनाय च ।
गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ॥

अव्याकृतविहाराय सर्वव्याकृतसिद्धये ।
हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने ॥

परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः ।
अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे ॥

त्वं ह्यस्य जन्मस्थितिसंयमान् प्रभो गुणैरनीहोऽकृत कालशक्तिधृक् ।
तत्तत्स्वभावान् प्रतिबोधयन् सतः समीक्षयामोघविहार ईहसे ॥

तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः ।
शान्ताः प्रियास्ते ह्यधुनावितुं सतां स्थातुश्च ते धर्मपरीप्सयेहतः ॥

अपराधः सकृद् भर्त्रा सोढव्यः स्वप्रजाकृतः ।
क्षन्तुमर्हसि शान्तात्मन् मूढस्य त्वामजानतः ॥

अनुगृह्णीष्व भगवन् प्राणांस्त्यजति पन्नगः ।
स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम् ॥

विधेहि ते किङ्करीणामनुष्ठेयं तवाज्ञया ।
यच्छ्रद्धयानुतिष्ठन् वै मुच्यते सर्वतोभयात् ॥१७६॥

१४। मुक्त्यनन्तरं कालियस्तवः । [१०.१६. ५६–५६]

वयं खलाः सहोत्पत्त्या तामसा दीर्घमन्यवः ।
स्वभावो दुस्त्यजो नाथ लोकानां यदसद्ग्रहः ॥

त्वया सृष्टमिदं विश्वं धातर्गुणविसर्जनम् ।
नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ॥

वयं च तत्र भगवन् सर्पा जात्युरुमन्यवः ।
कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः स्वयम् ॥

भवान् हि कारणं तत्र सर्वज्ञो जगदीश्वरः ।
अनुग्रहं निग्रहं वा मन्यसे तद् विधेहि नः ॥१८०॥

१५। दावानलपीडितानां गोपादीनां स्तुतिः । [१०.१९.९–१०]

कृष्ण कृष्ण महावीर हे रामामितविक्रम ।
दावाग्निना दह्यमानान् प्रपन्नांस्त्रातुमर्हथः ॥

नूनं त्वद्बान्धवाः कृष्ण न चार्हन्त्यवसीदितुम् ।
वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः ॥१८२॥

१६। वेणुगीतम् । [१०.२१. १–२०]

इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना ।
न्यविशद् वायुना वातं सगोगोपालकोऽच्युतः ॥

कुसुमितवनराजिशुष्मिभृङ्गद्विजकुलघुष्टसरःसरिन्महीध्रम् ।
मधुपतिरवगाह्य चारयन् गाः सहपशुपालबलश्चुकूज वेणुम् ॥

तद् व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम् ।
काश्चित् परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयन् ॥

तद् वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम् ।
नाशकन् स्मरवेगेन विक्षिप्तमनसो नृप ॥

बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं
बिभ्रद् वासः कनककपिशं वैजयन्तीं च मालाम् ।
रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दै-
र्वृन्दारण्यं स्वपदरमणं प्राविशद् गीतकीर्तिः ॥

इति वेणुरवं राजन् सर्वभूतमनोहरम् ।
श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे ॥

अक्षण्वतां फलमिदं न परं विदामः
सख्यः पशूननुविवेशयतोर्वयस्यैः ।
वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं
यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥

चूतप्रवालबर्हस्तबकोत्पलाब्ज-
मालानुपृक्तपरिधानविचित्रवेषौ ।
मध्ये विरेजतुरलं पशुपालगोष्ठ्यां
रङ्गे यथा नटवरौ क्व च गायमानौ ॥

गोप्यः किमाचरदयं कुशलं स्म वेणु-
र्दामोदराधरसुधामपि गोपिकानाम् ।
भुंक्ते स्वयं यदवशिष्टरसं ह्रदिन्यो
हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथाऽऽर्याः ॥

वृन्दावनं सखि भुवो वितनोति कीर्तिं
यद् देवकीसुतपदाम्बुजलब्धलक्ष्मि ।

गोविन्दवेणुमनु मत्तमयूरनृत्यं
प्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्त्वम् ॥

धन्याः स्म मूढमतयोऽपि हरिण्य एता
या नन्दनन्दनमुपात्तविचित्रवेषम् ।
आकर्ण्य वेणुरणितं सहकृष्णसाराः
पूजां दधुर्विरचितां प्रणयावलोकैः ॥

कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं
श्रुत्वा च तत्क्वणितवेणुविविक्तगीतम् ।
देव्यो विमानगतयः स्मरनुन्नसारा
भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः ॥

गावश्च कृष्णमुखनिर्गतवेणुगीत-
पीयूषमुत्तभितकर्णपुटैः पिबन्त्यः ।
शावाः स्नुतस्तनपयः कवलाः स्म तस्थु-
र्गोविन्दमात्मनि दृशाश्रुकलाः स्पृशन्त्यः ॥

प्रायो बताम्ब विहगा मुनयो वनेऽस्मिन्
कृष्णेक्षितं तदुदितं कलवेणुगीतम् ।
आरुह्य ये द्रुमभुजान् रुचिरप्रवालान्
शृण्वन्त्यमीलितदृशो विगतान्यवाचः ॥

नद्यस्तदा तदुपधार्य मुकुन्दगीत-
मावर्तलक्षितमनोभवभग्नवेगाः ।
आलिङ्गनस्थगितमूर्मिभुजैर्मुरारे-
र्गृह्णन्ति पादयुगलं कमलोपहाराः ॥

दृष्ट्वाऽऽतपे व्रजपशून् सह रामगोपैः
सञ्चारयन्तमनु बेणुमुदीरयन्तम् ।

प्रेमप्रवृद्ध उदितः कुसुमावलीभिः
सख्युर्व्यधात् स्ववपुषाम्बुद आतपत्रम् ॥

पूर्णाः पुलिन्द्य उरुगायपदाब्जराग-
श्रीकुंकुमेन दयितास्तनमण्डितेन ।
तद्दर्शनस्मररुजस्तृणरूषितेन
लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ॥

हन्तायमद्रिरबला हरिदासवर्यो
यद् रामकृष्णचरणस्पर्शप्रमोदः ।
मानं तनोति सहगोगणयोस्तयोर्यत्
पानीयसूयवसकन्दरकन्दमूलैः ॥

गा गोपकैरनुवनं नयतोरुदार-
वेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः ।
अस्पन्दनं गतिमतां पुलकस्तरूणां
निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥

एवंविधा भगवतो या वृन्दावनचारिणः ।
वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥२०२॥

१७। श्रीकृष्णस्योपेक्षायां यज्ञपत्नीनां प्रत्युत्तरवचनम् ।
[१०.२३. २९-३०]

मैवं विभोऽर्हति भवान् गदितुं नृशंसं
सत्यं कुरुष्व निगमं तव पादमूलम् ।
प्राप्ता वयं तुलसिदामपदावसृष्टं
केशैर्निवोढुमतिलंघ्य समस्तबन्धून् ॥

गृह्णन्ति नो न पतयः पितरौ सुता वा
न भ्रातृबन्धुसुहृदः कुत एव चान्ये ।

तस्माद् भवत्प्रपदयोः पतितात्मनां नो
नान्या भवेद् गतिररिन्दम तद् विधेहि ॥२०४॥

१८। श्रीकृष्णं प्रति इन्द्रस्य स्तवः । [१०.२७. ४–१३]

विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम् ।
मायामयोऽयं गुणसम्प्रवाहो न विद्यते तेऽग्रहणानुबन्धः ॥

कुतो नु तद्धेतव ईश तत्कृता लोभादयो येऽबुधलिङ्गभावाः ।
तथापि दण्डं भगवान् बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ॥

पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः ।
हिताय स्वेच्छातनुभिः समीहसे मानं विधुन्वञ्जगदीशमानिनाम् ॥

ये मद्विधाज्ञा जगदीशमानिनस्त्वां वीक्ष्य कालेऽभयमाशु तन्मदम् ।
हित्वाऽऽर्यमार्गं प्रभजन्त्यपस्मया ईहा खलानामपि तेऽनुशासनम् ॥

स त्वं ममैश्वर्यमदप्लुतस्य कृतागसस्तेऽविदुषः प्रभावम् ।
क्षन्तुं प्रभोऽथार्हसि मूढचेतसो मैवं पुनर्भून्मतिरीश मेऽसती ॥

तवावतारोऽयमधोक्षजेह स्वयम्भराणामुरुभारजन्मनाम् ।
चमूपतीनामभवाय देव भवाय युष्मच्चरणानुवर्तिनाम् ॥

नमस्तुभ्यं भगवते पुरुषाय महात्मने ।
वासुदेवाय कृष्णाय सात्वतां पतये नमः ॥

स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये ।
सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥

मयेदं भगवन् गोष्ठनाशायासारवायुभिः ।
चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना ॥

त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः ।
ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः ॥२१४॥

१९। सुरभिस्तवः । [१०.२७. १९–२१)

कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वसम्भव ।
भवता लोकनाथेन सनाथा वयमच्युत ॥

त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते ।
भवाय भव गोविप्रदेवानां ये च साधवः ॥

इन्द्रं नस्त्वाभिषेक्ष्यामो ब्रह्मणा नोदिता वयम् ।
अवतीर्णोऽसि विश्वात्मन् भूमेर्भारापनुत्तये ॥२१७॥

२०। वरुणालये समागतं श्रीकृष्णं प्रति वरुणस्य स्तुतिः ।
[१०.२८. ५–८]

अद्य मे निभृतो देहोऽद्यैवार्थोऽधिगतः प्रभो ।
त्वत्पादभाजो भगवन्नवापुः पारमध्वनः ॥

नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने ।
न यत्र श्रूयते माया लोकसृष्टिविकल्पना ॥

अजानता मामकेन मूढेनाकार्यवेदिना ।
आनीतोऽयं तव पिता तद् भवान् क्षन्तुमर्हति ॥

ममाप्यनुग्रहं कृष्ण कर्तुमर्हस्यशेषदृक् ।
गोविन्द नीयतामेष पिता ते पितृवत्सल ॥२२१॥

२१। श्रीगोपीगीतम् ।

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि ।
दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते ॥

शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा ।
सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥

विषजलाप्ययाद् व्यालराक्षसाद् वर्षमारुताद् वैद्युतानलात् ।
वृषमयात्मजाद् विश्वतोभयादृषभ ते वयं रक्षिता मुहुः ॥

न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥

विरचिताभयं वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात् ।
करसरोरुहं कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥

व्रजजनार्तिहन् वीर योषितां निजजनस्मयध्वंसनस्मित ।
भज सखे भवत्किङ्करीः स्म नो जलरुहाननं चारु दर्शय ॥

प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ।
फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥

मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ।
विधिकरीरिमा वीर मुह्यतीरधरसीधुनाऽऽप्याययस्व नः ॥

तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ।
श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥

प्रहसितं प्रिय प्रेमवीक्षणं विहरणं च ते ध्यानमङ्गलम् ।
रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयन्ति हि ॥

चलसि यद् व्रजाच्चारयन् पशून् नलिनसुन्दरं नाथ ते पदम् ।
शिलतृणांकुरैः सीदतीति नः कलिलतां मनः कान्त गच्छति ॥

दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम् ।
घनरजस्वलं दर्शयन् मुहुर्मनसि नः स्मरं वीर यच्छसि ॥

प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ।
चरणपङ्कजं शन्तमं च ते रमण नः स्तनेष्वर्पयाधिहन् ॥

सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ।
इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥

अटति यद् भवानह्नि काननं त्रुटियुगायते त्वामपश्यताम् ।
कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद् दृशाम् ॥

पतिसुतान्वयभ्रातृबान्धवानतिविलंघ्य तेऽन्त्यच्युतागताः ।
गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥

रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ।
बृहदुरः श्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः ॥

व्रजवनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्र्यलं विश्वमङ्गलम् ।
त्यज मनाक् च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥

यत्ते सुजातचरणाम्बुरुहं स्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु ।
तेनाटवीमटसि तद् व्यथते न किंस्वित्
कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥२४०॥

[१०.३१. १–१९]

इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ।
रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥
तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥२४२॥

[१०.३२. १–२]

## २२। युगलगीतम् । [१०.३५. २–२५]

वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम् ।
कोमलांगुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ॥

व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ।
काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥

हन्त चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत् ।
नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥

वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् ।
दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥

बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः ।
कर्हिचित् सबल आलि स गोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥

तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम् ।
स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ॥

अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ।
वनचरो गिरितटेषु चरन्तीर्वेणुनाऽऽह्वयति गाः स यदा हि ॥

वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः ।
प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ववृषुः स्म ॥

दर्शनीयतिलको वनमालादिव्यगन्धतुलसीमधुमत्तैः ।
अलिकुलैरलघुगीतमभीष्टमाद्रियन् यर्हि सन्धितवेणुः ॥

सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ।
हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥

सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ।
हर्षयन् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥

महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः ।
सुहृदमभ्यवर्षत् सुमनोभिश्छायया च विदधत् प्रतपत्रम् ॥

विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षाः ।
तव सुतः सति यदाधरबिम्बे दत्तवेणुरनयत् स्वरजातीः ॥

सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ।
कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥

निजपदाब्जदलैर्ध्वजवज्रनीरजांकुशविचित्रललामैः ।
व्रजभुवः शमयन् खुरतोदं वर्ष्मधुर्यगतिरीडितवेणुः ॥

व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ।
कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥

मणिधरः क्वचिदागणयन् गा मालया दयितगन्धतुलस्याः ।
प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन् भुजमगायत यत्र ॥

क्वणितवेणुरववञ्चितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः ।
गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥

कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥

मन्दवायुरुपवात्यनुकूलं मानयन् मलयजस्पर्शेन ।
वन्दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥

वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः ।
कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्तिः ॥

उत्सवं श्रमरुचापि दृशीनामुन्नयन् खुररजश्छुरितस्रक् ।
दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥

मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ।
बदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुण्डललक्ष्म्या ॥

यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥२६६॥

२३। भ्रमरगीतम्। [१०.४७. १२-२१]

मधुप कितवबन्धो मा स्पृशांघ्रिं सपत्न्याः
कुचविलुलितमालाकुंकुमश्मश्रुभिर्नः ।
वहतु मधुपतिस्तन्मानिनीनां प्रसादं
यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥

सकृदधरसुधां स्वां मोहिनीं पाययित्वा
सुमनस इव सद्यस्तत्यजेऽस्मान् भवादृक् ।
परिचरति कथं तत्पादपद्मं तु पद्मा
ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥

किमिह बहु षडंघ्रे गायसि त्वं यदूना-
मधिपतिमगृहाणामग्रतो नः पुराणम् ।
विजयसखसखीनां गीयतां तत्प्रसङ्गः
क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥

दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः
कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ।
चरणरज उपास्ते यस्य भूतिर्वयं का
अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥

विसृज शिरसि पादं वेद्म्यहं चाटुकारै-
रनुनयविदुपस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ।
स्वकृत इह विसृष्टापत्यपत्यन्यलोका
व्यसृजदकृतचेताः किं नु सन्धेयमस्मिन् ॥

मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा
स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ।

बलिमपि बलिमत्त्वावेष्टयद् ध्वांक्षवद् य-
स्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥

यदनुचरितलीलाकर्णपीयूषविप्रुट-
सकृददनविधूतद्वन्द्वधर्मा विनष्टाः ।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना
बहव इह विहङ्गा भिक्षुचर्यां चरन्ति ॥

वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः
कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ।
ददृशुरसकृदेतत्तन्नखस्पर्शतीव्र-
स्मररुज उपमन्त्रिन् भण्यतामन्यवार्ता ॥

प्रियसख पुनरागाः प्रेयसा प्रेषितः किं
वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ।
नयसि कथमिहास्मान् दुस्त्यजद्वन्द्वपार्श्वं
सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥

अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते
स्मरति स पितृगेहान् सौम्य बन्धूंश्च गोपान् ।
क्वचिदपि स कथा नः किङ्करीणां गृणीते
भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु ॥२७६॥

२४। मुचुकुन्दस्तवः । [१०.५१. ४६–५८]

विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित् पुरुषश्च वञ्चितः ॥
लब्ध्वा जनो दुर्लभमत्र मानुषं कथञ्चिदव्यङ्गमयत्नतोऽनघ ।
पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥

ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः ।
मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया ॥
कलेवरेऽस्मिन् घटकुड्यसन्निभे निरूढमानो नरदेव इत्यहम् ।
वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वागणयन् सुदुर्मदः ॥
प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥
पुरा रथैर्हेमपरिष्कृतैश्चरन् मतङ्गजैर्वा नरदेवसंज्ञितः ।
स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥
निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः ।
गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते ॥
करोति कर्माणि तपस्सुनिष्ठितो निवृत्तभोगस्तदपेक्षया ददत् ।
पुनश्च भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥
भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः ।
सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥
मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया ।
यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखण्डभूमिपैः ॥
न कामयेऽन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद् वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम् ॥
तस्माद् विसृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबन्धनाः ।
निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥

चिरमिह वृजिनार्तस्तप्यमानोऽनुतापै-
रवितृषषडमित्रोऽलब्धशान्तिः कथञ्चित् ।
शरणद समुपेतस्त्वत्पदाब्जं परात्म-
न्नभयमृतमशोकं पाहि माऽऽपन्नमीश ॥२८९॥

२५। वैदर्भ्याः प्रेमजसङ्कल्पः । [१०.५२. ३७–४३]

श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां ते
निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् ।
रूपं दृशां दृशिमतामखिलार्थलाभं
त्वय्यच्युताविशति चित्तमपत्रपं मे ॥

का त्वा मुकुन्द महती कुलशीलरूप-
विद्यावयोद्रविणधामभिरात्मतुल्यम् ।
धीरा पतिं कुलवती न वृणीत कन्या
काले नृसिंह नरलोकमनोऽभिरामम् ॥

तन्मे भवान् खलु वृतः पतिरङ्ग जाया-
मात्मार्पितश्च भवतोऽत्र विभो विधेहि ।
मा वीरभागमभिमर्शतु चैद्य आराद्
गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥

पूर्तेष्टदत्तनियमव्रतदेवविप्र-
गुर्वर्चनादिभिरलं भगवान् परेशः ।
आराधितो यदि गदाग्रज एत्य पाणिं
गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥

श्वोभाविनि त्वमजितोद्वहने विदर्भान्
गुप्तः समेत्य पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥

अन्तःपुरान्तरचरीमनिहत्य बन्धू-
स्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।
पूर्वेद्युरस्ति महती कुलदेवियात्रा
यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥

यस्यांघ्रिपङ्कजरजःस्नपनं महान्तो
वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं
जह्यामसून् व्रतकृशाञ्छतजन्मभिः स्यात् ॥२९६॥

२६। नरकासुरपुर्यां धरणीदेवीकृतस्तवः । [१०.५९. २५–३१]

नमस्ते देवदेवेश शङ्खचक्रगदाधर ।
भक्तेच्छोपात्तरूपाय परमात्मन् नमोऽस्तु ते ॥
नमः पङ्कजनाभाय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय नमस्ते पङ्कजांघ्रये ॥
नमो भगवते तुभ्यं वासुदेवाय विष्णवे ।
पुरुषायादिबीजाय पूर्णबोधाय ते नमः ॥
अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये ।
परावरात्मन् भूतात्मन् परमात्मन् नमोऽस्तु ते ॥
त्वं वै सिसृक्षू रज उत्कटं प्रभो तमो निरोधाय बिभर्ष्यसंवृतः ।
स्थानाय सत्त्वं जगतो जगत्पते कालः प्रधानं पुरुषो भवान् परः ॥
अहं पयोज्योतिरथानिलो नभो मात्राणि देवा मन इन्द्रियाणि ।
कर्त्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवन्नयं भ्रमः ॥
तस्यात्मजोऽयं तव पादपङ्कजं भीतः प्रपन्नार्तिहरोपसादितः ।
तत् पालयैनं कुरु हस्तपङ्कजं शिरस्यमुष्याखिलकल्मषापहम् ॥३०३॥

२७। बाणासुरयुद्धे रुद्रस्य भगवत्स्तवः । [१०.६३. ३४–४५]

त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये ।
यं पश्यन्त्यमलात्मान आकाशमिव केवलम् ॥

नाभिर्नभोऽग्निर्मुखमम्बु रेतो द्यौः शीर्षमाशा श्रुतिरंघ्रिरुर्वी ।
चन्द्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं भुजेन्द्रः ॥

रोमाणि यस्यौषधयोऽम्बुवाहाः केशा विरिञ्चो धिषणा विसर्गः ।
प्रजापतिर्हृदयं यस्य धर्मः स वै भवान् पुरुषो लोककल्पः ॥

तवावतारोऽयमकुण्ठधामन् धर्मस्य गुप्त्यै जगतो भवाय ।
वयं च सर्वे भवतानुभाविता विभावयामो भुवनानि सप्त ॥

त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यः स्वदृग्धेतुरहेतुरीशः ।
प्रतीयसेऽथापि यथाविकारं स्वमायया सर्वगुणप्रसिद्ध्यै ॥

यथैव सूर्यः पिहितश्छायया स्वया छायां च रूपाणि च सञ्चकास्ति ।
एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥

यन्मायामोहितधियः पुत्रदारगृहादिषु ।
उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे ॥

देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः ।
यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः ॥

यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् ।
विपर्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजन् ॥

अहं ब्रह्माथ विबुधा मुनयश्चामलाशयाः ।
सर्वात्मना प्रपन्नास्त्वामात्मानं प्रेष्ठमीश्वरम् ॥

तं त्वा जगत्स्थित्युदयान्तहेतुं समं प्रशान्तं सुहृदात्मदैवम् ।
अनन्यमेकं जगदात्मकेतं भवापवर्गाय भजाम देवम् ॥

अयं ममेष्टो दयितोऽनुवर्ती मयाभयं दत्तममुष्य देव ।
सम्पाद्यतां तद् भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः ॥

२८। नृगराजस्य श्रीकृष्णस्तवः। [१०.६४. २५-२९]

ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव।
स्मृतिर्नाद्यापि विध्वस्ता भवत्सन्दर्शनार्थिनः॥

स त्वं कथं मम विभोऽक्षिपथः परात्मा
योगेश्वरैः श्रुतिदृशामलहृद्विभाव्यः।
साक्षादधोक्षज उरुव्यसनान्धबुद्धेः
स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः॥

देवदेव जगन्नाथ गोविन्द पुरुषोत्तम।
नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय॥

अनुजानीहि मां कृष्ण यान्तं देवगतिं प्रभो।
यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम्॥

नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये।
कृष्णाय वासुदेवाय योगानां पतये नमः॥३२०॥

२९। दृष्टगार्हस्थ्यलीलस्य नारदस्य भगवत्स्तुतिः।
[१०.६९. १७,१८, ३८,३९]

नैवाद्भुतं त्वयि विभोऽखिललोकनाथे
मैत्री जनेषु सकलेषु दमः खलानाम्।
निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां
स्वैरावतार उरुगाय विदाम सुष्ठु॥

दृष्टं तवांघ्रियुगलं जनतापवर्गं
ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः।
संसारकूपपतितोत्तरणावलम्बं
ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात्॥

विदाम योगमायास्ते दुर्दर्शा अपि मायिनाम् ।
योगेश्वरात्मन् निर्भाता भवत्पादनिषेवया ॥
अनुजानीहि मां देव लोकांस्ते यशसाऽऽप्लुतान् ।
पर्यटामि तवोद्गायन् लीलां भुवनपावनीम् ॥३२४॥

३०। जरासन्धरुद्धराजगणकृता विज्ञप्तिः । [१०.७०. २५–३०]

कृष्ण कृष्णाप्रमेयात्मन् प्रपन्नभयभञ्जन ।
वयं त्वां शरणं यामो भवभीताः पृथग्धियः ॥

लोको विकर्मनिरतः कुशले प्रमत्तः
कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।
यस्तावदस्य बलवानिह जीविताशां
सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥

लोके भवाञ्जगदिनः कलयावतीर्णः
सद्रक्षणाय खलनिग्रहणाय चान्यः ।
कश्चित् त्वदीयमतियाति निदेशमीश
किं वा जनः स्वकृतमृच्छति तन्न विद्मः ॥

स्वप्नायितं नृपसुखं परतन्त्रमीश
शश्वद्भयेन मृतकेन धुरं वहामः ।
हित्वा तदात्मनि सुखं त्वदनीहलभ्यं
क्लिश्यामहेऽतिकृपणास्तव माययेह ॥

तन्नो भवान् प्रणतशोकहरांघ्रियुग्मो
बद्धान् वियुङ्क्ष्व मगधाह्वयकर्मपाशात् ।
यो भूभुजोऽयुतमतङ्गजवीर्यमेको
बिभ्रद् रुरोध भवने मृगराडिवावीः ॥

योे वै त्वया द्विनवकृत्व उदात्तचक्र
भग्नो मृधे खलु भवन्तमनन्तवीर्यम् ।
जित्वा नृलोकनिरतं सकृदूढदर्पो
युष्मत्प्रजा रुजति नोऽजित तद् विधेहि ॥३०॥

३१। जरासन्धकारागारान्मुक्तानां नृपाणां स्तुतिः ।
[१०.७३. ८–१६]

नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ।
प्रपन्नान् पाहि नः कृष्ण निर्विण्णान् घोरसंसृतेः ॥
नैनं नाथान्वसूयामो मागधं मधुसूदन ।
अनुग्रहो यद् भवतो राज्ञां राज्यच्युतिर्विभो ॥
राज्यैश्वर्यमदोन्नद्धो न श्रेयो विन्दते नृपः ।
त्वन्मायामोहितोऽनित्या मन्यते सम्पदोऽचलाः ॥
मृगतृष्णां यथा बाला मन्यन्त उदकाशयम् ।
एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥
वयं पुरा श्रीमदनष्टदृष्टयो
जिगीषयास्या इतरेतरस्पृधः ।
घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो
मृत्युं पुरस्त्वाविगणय्य दुर्मदाः ॥
त एव कृष्णाद्य गभीररंहसा
दुरन्तवीर्येण विचालिताः श्रियः ।
कालेन तन्वा भवतोऽनुकम्पया
विनष्टदर्पाश्चरणौ स्मराम ते ॥
अथो न राज्यं मृगतृष्णिरूपितं
देहेन शश्वत् पतता रुजां भुवा ।

उपासितव्यं स्पृहयामहे विभो
क्रियाफलं प्रेत्य च कर्णरोचनम् ॥

तं नः समादिशोपायं येन ते चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संसरतामिह ॥

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥३३९॥

३२। जरासन्धवधानन्तरं युधिष्ठिरस्य श्रीकृष्णस्तवः ।
[१०.७४. २–५]

ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः ।
वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥

स भवानरविन्दाक्षो दीनानामीशमानिनाम् ।
धत्तेऽनुशासनं भूमंस्तदत्यन्तविडम्बनम् ॥

न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ।
कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥

न वै तेऽजित भक्तानां ममाहमिति माधव ।
त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥३४३॥

३३। श्रीभगवत्प्रणीतां मुनीनां प्रशंसावाचं श्रुत्वा मुनीनां प्रतिवचनेन स्तोत्रम् ।
[१०.८४. १६–२६]

यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वराः ।
यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥

अनीह एतद् बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ।
भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥

अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय च ।
स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥

ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः ।
यत्रोपलब्धं सद् व्यक्तमव्यक्तं च ततः परम् ॥

तस्माद् ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्त्वमात्मनः ।
सभाजयसि सद्धाम तद् ब्रह्मण्याग्रणीर्भवान् ॥

अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः ।
त्वया संगम्य सद्गत्या यदन्तः श्रेयसां परः ॥

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ।
स्वयोगमाययाच्छन्नमहिम्ने परमात्मने ॥

न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः ।
मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥

यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक् ।
नाममात्रेन्द्रियाभातं न वेद रहितं परम् ॥

एवं त्वा नाममात्रेषु विषयेष्विन्द्रियेहया ।
मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् ॥

तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः ।
उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥

३४। रामकृष्णौ प्रति वसुदेवस्तुतिः । [१०.८५. ३–२०]

कृष्ण कृष्ण महायोगिन् सङ्कर्षण सनातन ।
जाने वामस्य यत् साक्षात् प्रधानपुरुषौ परौ ॥

यत्र येन यतो यस्य यस्मै यद् यद् यथा यदा ।
स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥

एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज ।
आत्मनानुप्रविश्यात्मन् प्राणो जीवो बिभर्ष्यज ॥

प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः ।
पारतन्त्र्याद् वै सादृश्याद् द्वयोश्चेष्टैव चेष्टताम् ॥

कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कर्क्षविद्युताम् ।
यत् स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥

तर्पणं प्राणनमपां देवत्वं ताश्च तद्रसः ।
ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥

दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ।
नादो वर्ण स्त्वमोङ्कार आकृतीनां पृथक्कृतिः ॥

इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः ।
अवबोधो भवान् बुद्धेर्जीवस्यानुस्मृतिः सती ॥

भूतानामसि भूतादिरिन्द्रियाणां च तैजसः ।
वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥

नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ।
यथा द्रवविकारेषु द्रव्यमात्रं निरूपितम् ॥

सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ।
त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥

तस्मान्न सन्त्यमी भावा यर्हि त्वयि विकल्पिताः ।
त्वं चामीषु विकारेषु ह्यन्यदाव्यावहारिकः ॥

गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः ।
गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः ॥

यदृच्छयानृतां प्राप्य सुकल्पामिह दुर्लभाम् ।
स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥

असावहं ममैवैते देहे चास्यान्वयादिषु ।
स्नेहपाशैर्निबध्नाति भवान् सर्वमिदं जगत् ॥

युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वरौ ।
भूभारक्षत्रक्षपण अवतीर्णौ तथाऽऽत्थ ह ॥

तत्ते गतोऽस्म्यरणमद्य पदारविन्दमापन्नसंसृतिभयापहमार्तबन्धो ।
एतावतालमलमिन्द्रियलालसेन मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥

सूतीगृहे ननु जगाद भवानजो नौ संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ।
नानातनूर्गगनवद् विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम्

३५। देवकीप्रार्थनम् । [१०.८५. २९–३३]

राम रामाप्रमेयात्मन् कृष्ण योगेश्वरेश्वर ।
वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥

कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् ।
भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥

यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः ।
भवन्ति किल विश्वात्मंस्तं त्वाद्याहं गतिं गता ॥

चिरान्मृतसुतादाने गुरुणा कालचोदितौ ।
आनिन्यथुः पितृस्थानाद् गुरवे गुरुदक्षिणाम् ॥

तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ।
भोजराजहतान् पुत्रान् कामये द्रष्टुमाहृतान् ॥३७७॥

३६। सुतलगतयोः रामकृष्णयोः बलिकृतस्तवः । [१०.८५. ३९–४६]

नमोऽनन्ताय बृहते नमः कृष्णाय वेधसे ।
सांख्ययोगवितानाय ब्रह्मणे परमात्मने ॥

दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् ।
रजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया ॥

दैत्यदानवगन्धर्वाः सिद्धविद्याध्रचारणाः ।
यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥

विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि ।
नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः ॥

केचनोद्बद्धवैरेण भक्त्या केचन कामतः ।
न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः ॥

इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ।
न विदन्त्यपि योगेशा योगमायां कुतो वयम् ॥

तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्
पादारविन्दधिषणान्यगृहान्धकूपात् ।
निष्क्रम्य विश्वशरणांघ्र्युपलब्धवृत्तिः
शान्तो यथैक उत सर्वसखैश्चरामि ॥

शाध्यस्मानीशितव्येश निष्पापान् कुरु नः प्रभो ।
पुमान् यच्छ्रद्धयाऽऽतिष्ठंश्चोदनाया विमुच्यते ॥३८५॥

३७। बहुलाश्वस्तवः । [१०.८६. ३१–३६]

भवान् हि सर्वभूतानामात्मा साक्षी स्वदृग् विभो ।
अथ नस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः ॥

स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान् ।
यदात्थैकान्तभक्तान्मे नानन्तः श्रीरजः प्रियः ॥

को नु त्वच्चरणाम्भोजमेवंविद् विसृजेत् पुमान् ।
निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः ॥

योऽवतीर्य यदोर्वंशे नृणां संसरतामिह ।
यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम् ॥

नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे ।
नारायणाय ऋषये सुशान्तं तप ईयुषे ॥

दिनानि कतिचिद् भूमन् गृहान् नो निवस द्विजैः ।
समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥३९१॥

३८। श्रुतदेवस्तुतिः । [१०.८६. ४४-४९]

नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ।
यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥

यथा शयानः पुरुषो मनसैवात्ममायया ।
सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥

शृण्वतां गदतां शश्वदर्चतां त्वाभिवन्दताम् ।
नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥

हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ।
आत्मशक्तिभिरग्राह्योऽप्यन्त्युपेतगुणात्मनाम ॥

नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ।
सकारणाकारणलिङ्गमीयुषे स्वमाययासंवृतरुद्धदृष्टये ॥

स त्वं शाधि स्वभृत्यान् नः किं देव करवामहे ।
एतदन्तो नृणां क्लेशो यद् भवानक्षिगोचरः ॥३९७॥

३६। वेदस्तुतिः । [१०.८७. १४-४१]

जय जय जह्यजामजित दोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः ॥

बृहदुपलब्धमेतदवयन्त्यवशेषतया
यत उदयास्तमयौ विकृतेर्मृदि वाविकृतात् ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥

इति तव सूरयस्त्र्यधिपतेऽखिललोकमल-
क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ॥

दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा
महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।
तत उदगादनन्त तव धाम शिरः परमं
पुनरिह यत् समेत्य न पतन्ति कृतान्तमुखे ॥

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्स्यनलवत् स्वकृतानुकृतिः ।

अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोऽन्वयन्त्यभिविपण्यव एकरसम् ॥

स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ।
इति नृगतिं विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्घ्रिमभवंभुवि विश्वसिताः ॥

दुरवगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥

त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियव-
च्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।
न बत रमन्त्यहो असदुपासनयाऽऽत्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि य-
न्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥

क इह नु वेद बतावरजन्मलयोऽग्रसरं
यत उदगादृषिर्यमनु देवगणा उभये ।
तर्हि न सन्न चासदुभयं न च कालजवः
किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥

जनिमसतः सतो मृतिमुतात्मनि ये च भिदां
विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः ।

त्रिगुणमयः पुमानिति भिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे ॥

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्
सदभिमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः ।
न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयावसितम् ॥

तव परि ये चरन्त्यखिलसत्त्वनिकेततया
त उत पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः ।
परिवयसे पशूनिव गिरा विबुधानपि तां-
स्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥

त्वमकरणः स्वराडखिलकारकशक्तिधर-
स्तव बलिमुद्वहन्ति समदन्त्यजयानिमिषाः ।
वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥

स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो
विहर उदीक्षया यदि परस्य विमुक्त ततः ।
न हि परमस्य कश्चिदपरो न परश्च भवेद्
वियत इवापदस्य तव शून्यतुलां दधतः ॥

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता-
स्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ।
अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्
सममनुजानतां यदमतं मतदुष्टतया ॥

न घटत उद्भवः प्रकृतिपूरुषयोरजयो-
रुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ।

त्वयि त इमे ततो विविधनामगुणैः परमे
सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥

नृषु तव मायया भ्रमममीष्ववगत्य भृशं
त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।
कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः
सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥

विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥

स्वजनसुतात्मदारधनधामधरासुरथै-
स्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।
इति सदजानतां मिथुनतो रतये चरतां
सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥

भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-
स्त उत भवत्पदाम्बुजहृदोऽघभिदंघ्रिजलाः ।
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
न पुनरुपासते पुरुषसारहरावसथान् ॥

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।
व्यवहृतये विकल्प इषितोऽन्धपरम्परया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥

न यदिदमग्र आस न भविष्यदतो निधना-
दनुमितमन्तरा त्वयि विभाति मृषैकरसे ।

अत उपमीयते द्रविणजातिविकल्पपथै-
र्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥

स यदजया त्वजामनुशयीत गुणांश्च जुषन्
भजति सरूपतां तदनु मृत्युमपेतभगः ।
त्वमुत जहासि तामहिरिव त्वचमात्तभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥

यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।
असुतृपयोगिनामुभयतोऽप्यसुखं भगव-
न्ननपगतान्तकादनधिरूढपदाद् भवतः ॥

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयो-
र्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ।
अनुयुगमन्वहं सगुण गीतपरम्परया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥

द्युपतय एव ते न ययुरन्तमनन्ततया
त्वमपि यदन्तराण्डनिचया ननु सावरणाः ।
ख इव रजांसि वान्ति वयसा सह यच्छ्रुतय-
स्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥४२५॥

४०। श्रीकृष्णस्यान्यावतारवैलक्षण्ये श्रीशुकस्तुतिः ।

[१०.९०.४७-५०]

तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं
विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ।
यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः
कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥

जयति जननिवासो देवकीजन्मवादो
यदुवरपर्षत्स्वैर्दोर्भिरस्यन्नधर्मम् ।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्धयन् कामदेवम् ॥

इत्थं परस्य निजवर्त्मरिरक्षयाऽऽत्त-
लीलातनोस्तदनुरूपविडम्बनानि ।
कर्माणि कर्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥

मर्त्यस्तयानुसवमेधितया मुकुन्द-
श्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।
तद्धाम दुस्तरकृतान्तजवापवर्गं
ग्रामाद् वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥४२९॥

४१। करभाजनयोगीन्द्रकृता भगवत्स्तुतिः । [११.५. २९–३३]

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥

नारायणाय ऋषये पुरुषाय महात्मने ।
विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥

इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरम् ।
नानातन्त्रविधानेन कलावपि तथा शृणु ॥

कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।

भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ॥४३४॥

४२। ब्रह्मादिदेवानां स्तवः । [११.६. ७-१९]

नताः स्म ते नाथ पदारविन्दं
बुद्धीन्द्रियप्राणमनोवचोभिः ।
यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तै-
र्मुमुक्षुभिः कर्ममयोरुपाशात् ॥

त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं
व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः ।
नैतैर्भवानजित कर्मभिरज्यते वै
यत् स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥

शुद्धिर्नृणां न तु तथेड्य दुराशयानां
विद्याश्रुताध्ययनदानतपःक्रियाभिः ।
सत्त्वात्मनामृषभ ते यशसि प्रवृद्ध-
सच्छ्रद्धया श्रवणसम्भृतया यथा स्यात् ॥

स्यान्नस्तवांघ्रिरशुभाशयधूमकेतुः
क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ।
यः सात्वतः समविभूतय आत्मवद्भि-
र्व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय ॥

यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ
त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा ।
अध्यात्मयोग उत योगिभिरात्ममायां
जिज्ञासुभिः परमभागवतैः परीष्टः ॥

पर्युष्ट्या तव विभो वनमालयेयं
संस्पर्धिनी भगवती प्रतिपत्निवच्छ्रीः।
यः सुप्रणीतममुयार्हणमाददन्नो
भूयात् सदांघ्रिरशुभाशयधूमकेतुः॥

केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको
यस्ते भयाभयकरोऽसुरदेवचम्वोः।
स्वर्गाय साधुषु खलेष्वितराय भूमन्
पादः पुनातु भगवन् भजतामघं नः॥

नस्योतगाव इव यस्य वशे भवन्ति
ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः।
कालस्य ते प्रकृतिपूरुषयोः परस्य
शं नस्तनोतु चरणः पुरुषोत्तमस्य॥

अस्यासि हेतुरुदयस्थितिसंयमाना-
मव्यक्तजीवमहतामपि कालमाहुः।
सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः
कालो गभीररय उत्तमपूरुषस्त्वम्॥

त्वत्तः पुमान् समधिगम्य यया स्ववीर्यं
धत्ते महान्तमिव गर्भममोघवीर्यः।
सोऽयं तयानुगत आत्मन आण्डकोशं
हैमं ससर्ज बहिरावरणैरुपेतम्॥

तत्तस्थुषश्च जगतश्च भवानधीशो
यन्माययोत्थगुणविक्रिययोपनीतान्।
अर्थाञ्जुषन्नपि हृषीकपते न लिप्तो
येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म॥

स्मायावलोकलवदर्शितभावहारि-
भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणै-
र्यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः ॥

विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः
पादावनेजसरितः शमलानि हन्तुम् ।
आनुश्रवं श्रुतिभिरंघ्रिजमङ्गसङ्गै-
स्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥४४७॥

४३। श्रीशुककृत श्रीकृष्णस्तुतिः । [११.२९ ४९]

भवभयमपहन्तुं ज्ञानविज्ञानसारं
निगमकृदुपजह्रे भृङ्गवद् वेदसारम् ।
अमृतमुदधितश्चापाययद् भृत्यवर्गान्
पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मि ॥४४८॥

इति श्रीमद्भागवतीयश्रीकृष्णस्तवाः समाप्ताः ।

## श्रीराधिकाष्टकम् (१) ।

दिशि दिशि रचयन्तीं सञ्चरन्नेत्रलक्ष्मी-
विलसित-खुरलीभिः खञ्जरीटस्य खेलाम् ।
हृदयमधुपमल्लीं बल्लवाधीशसूनो-
रखिल--गुण--गभीरां राधिकामर्चयामि ॥ १ ॥

पितुरिह वृषभानोरन्ववाय--प्रशस्तिं
जगति किल समस्ते सुष्ठु विस्तारयन्तीम् ।
व्रजनृपतिकुमारं खेलयन्तीं सखीभिः
सुरभिणि निजकुण्डे राधिकामर्चयामि ॥ २ ॥

शरदुपचित–राका–कौमुदीनाथ–कीर्ति–
प्रकर–दमनदीक्षा–दक्षिण–स्मेरवक्त्राम् ।
नटदघभिदपाङ्गोत्तुङ्गितानङ्ग–रङ्गां
कलित–रुचि–तरङ्गां राधिकामर्चयामि ॥ ३ ॥

विविध–कुसुम–वृन्दोत्फुल्ल–धम्मिल्ल–धाटी-
विघटित–मद-घूर्णत्-केकि-पिच्छ-प्रशस्तिम् ।
मधुरिपु–मुख–बिम्बोद्गीर्ण–ताम्बूल–राग-
स्फुरदमल–कपोलां राधिकामर्चयामि ॥ ४ ॥

अमलिन–ललितान्तःस्नेह–सिक्तान्तरङ्गा–
मखिल-विधविशाखा-सख्य-विख्यात-शीलाम् ।
स्फुरदघभिदनर्घ–प्रेम–माणिक्य–पेटीं
धृत–मधुर–विनोदां राधिकामर्चयामि ॥ ५ ॥

अतुल–महसि वृन्दारण्यराज्येऽभिषिक्तां
निखिल–समय–भर्तुः कार्तिकस्याधिदेवीम् ।
अपरिमित–मुकुन्द–प्रेयसी–वृन्द–मुख्यां
जगदघहर–कीर्तिं राधिकामर्चयामि ॥ ६ ॥

हरिपदनख–कोटी–पृष्ठ–पर्यन्त–सीमा–
तटमपि कलयन्तीं प्राण–कोटेरभीष्टाम् ।
प्रमुदित–मदिराक्षी–वृन्द–वैदग्ध्य–दीक्षा–
गुरुमति–गुरुकीर्तिं राधिकामर्चयामि ॥ ७ ॥

अमल–कनक–पट्टोद्घृष्ट–काश्मीर–गौरीं
मधुरिम–लहरीभिः संपरीतां किशोरीम् ।
हरिभुज–परिरब्धां लब्ध–रोमाञ्च–पालिं
स्फुरदरुण–दुकूलां राधिकामर्चयामि ॥ ८ ॥

तदमल-मधुरिम्णां काममाधाररूपं
परिपठति वरिष्ठं सुष्ठु राधाष्टकं यः ।
अहिम-किरण-पुत्री-कूल-कल्याण-चन्द्रः
स्फुटमखिलमभीष्टं तस्य तुष्टस्तनोति ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीराधिकाष्टकं (१) संपूर्णम् ।

# श्रीराधिकाष्टकम् (२) ।

रस-वलित-मृगाक्षी-मौलि-माणिक्य-लक्ष्मीः
प्रमुदित-मुरवैरि-प्रेमवापी-मराली ।
व्रजवर-वृषभानोः पुण्य-गीर्वाणवल्ली
स्नपयति निजदास्ये राधिका मां कदा नु ॥ १ ॥

स्फुरदरुण-दुकूल-द्योतितोद्यन्नितम्ब-
स्थलमभि-वरकाञ्चि-लास्यमुल्लासयन्ती ।
कुचकलस-विलास-स्फीत-मुक्तासर-श्रीः
स्नपयति निजदास्ये राधिका मां कदा नु ॥ २ ॥

सरसिजवर-गर्भाखर्व-कान्तिः समुद्यत्-
तरुणिम-घनसाराश्लिष्ट-कैशोर-सीधुः ।
दर-विकसित-हास्य-स्यन्दि-विम्बाधराग्रा
स्नपयति निजदास्ये राधिका मां कदा नु ॥ ३ ॥

अति-चटुलतरं तं काननान्तर्मिलन्तं
व्रजनृपति-कुमारं वीक्ष्य शङ्काकुलाक्षी ।

मधुर-मृदु-वचोभिः संस्तुता नेत्रभङ्ग्या
स्नपयति निजदास्ये राधिका मां कदा नु ॥ ४ ॥

व्रजकुल-महिलानां प्राणभूताखिलानां
पशुप-पति-गृहिण्याः कृष्णवत् प्रेमपात्रम् ।
सुललित-ललितान्तःस्नेह-फुल्लान्तरात्मा
स्नपयति निजदास्ये राधिका मां कदा नु ॥ ५ ॥

निरवधि सविशाखा शाखियूथ-प्रसूनैः
स्रजमिह रचयन्ती वैजयन्तीं वनान्ते ।
अघ-विजय-वरोरःप्रेयसी श्रेयसी सा
स्नपयति निजदास्ये राधिका मां कदा नु ॥ ६ ॥

प्रकटित-निजवासं स्निग्ध-वेणु-प्रणादै-
र्द्रुतगति-हरिमारात् प्राप्य कुञ्जे स्मिताक्षी ।
श्रवण-कुहर-कण्डूं तन्वती नम्रवक्त्रा
स्नपयति निजदास्ये राधिका मां कदा नु ॥ ७ ॥

अमल-कमल-राजि-स्पर्शि-वात-प्रशीते
निजसरसि निदाघे सायमुल्लासिनीयम् ।
परिजन-गण-युक्ता क्रीडयन्ती बकारिं
स्नपयति निजदास्ये राधिका मां कदा नु ॥ ८ ॥

पठति विमलचेता मृष्टराधाष्टकं यः
परिहृत-निखिलाशा-सन्ततिः कातरः सन् ।
पशुप-पति-कुमारः काममामोदितस्तं
निजजन-गणमध्ये राधिकायास्तनोति ॥ ९ ॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीराधिकाष्टकं (२) संपूर्णम् ।

# श्रीराधिकाष्टकम् (३) ।

कुंकुमाक्त–काञ्चनाब्ज–गर्वहारि–गौरभा
पीतनाञ्चिताब्ज–गन्धकीर्ति निन्दि-सौरभा ।
बल्लवेश–सूनु–सर्व–वाञ्छितार्थ–साधिका
मह्यमात्म–पादपद्म–दास्यदास्तु राधिका ॥ १ ॥

कौरविन्द–कान्ति–निन्दि–चित्र–पत्र–शाटिका
कृष्ण–मत्तभृङ्ग–केलि–फुल्ल–पुष्प–वाटिका ।
कृष्ण–नित्य–सङ्गमार्थपद्मबन्धु–राधिका
मह्यमात्म–पादपद्म–दास्यदास्तु राधिका ॥ २ ॥

सौकुमार्य–सृष्ट–पल्लवालि–कीर्ति–निग्रहा
चन्द्र–चन्दनोत्पलेन्दु–सेव्य–शीत–विग्रहा ।
स्वाभिमर्ष–बल्लवीश–काम–ताप–बाधिका
मह्यमात्म–पादपद्म–दास्यदास्तु राधिका ॥ ३ ॥

विश्ववन्द्य–यौवताभिवन्दितापि या रमा
रूप–नव्य–यौवनादि–सम्पदा न यत्समा ।
शील-हार्द-लीलया च सा यतोऽस्ति नाधिका
मह्यमात्म–पादपद्म–दास्यदास्तु राधिका ॥ ४ ॥

रास–लास्य गीत–नर्म–सत्कलालि–पण्डिता
प्रेम–रम्य–रूप–वेश–सद्गुणालि-मण्डिता ।
विश्व–नव्य–गोप–योषिदालितोऽपि याधिका
मह्यमात्म–पादपद्म–दास्यदास्तु राधिका ॥ ५ ॥

नित्य–नव्य–रूप–केलि–कृष्णभाव–सम्पदा
कृष्णराग–बन्ध–गोप–यौवतेषु–कम्पदा ।

कृष्ण–रूप–वेश–केलि–लग्न–सत्समाधिका
मह्यमात्म–पादपद्म–दास्यदास्तु राधिका ॥ ६ ॥

स्वेद–कम्प–कण्टकाश्रु–गद्गदादि–सञ्चिता–
मर्ष–हर्ष–वामतादि–भाव–भूषणाञ्चिता ।
कृष्ण–नेत्र–तोषि–रत्न–मण्डनालि–दाधिका
मह्यमात्म–पादपद्म–दास्यदास्तु राधिका ॥ ७ ॥

या क्षणार्ध–कृष्ण–विप्रयोग–सन्ततोदिता–
नेक–दैन्य–चापलादि–भाववृन्द–मोदिता ।
यत्नलब्ध–कृष्णसङ्ग–निर्गताखिलाधिका
मह्यमात्म–पादपद्म–दास्यदास्तु राधिका ॥ ८ ॥

अष्टकेन यस्त्वनेन नौति कृष्णवल्लभां
दर्शनेऽपि शैलजादि–योषिदालि–दुर्लभाम् ।
कृष्णसङ्ग–नन्दितात्म–दास्य–सीधु–भाजनं
तं करोति नन्दितालि–सञ्चयाशु सा जनम् ॥ ९ ॥

इति श्रीलकृष्णदासकविराजगोस्वामिविरचित–
गोविन्दलीलामृते श्रीराधिकाष्टकं (३) संपूर्णम् ।

## श्रीराधिकाष्टकम् (४) ।

जानाति किञ्चिदपि सा हृदि मे विभाति
राधा वशीकरण–मंत्रमवश्यमेव ।
नो चेत् कथं सुर–मुनीन्द्र–नुतं–शरण्यं
दासाभिमानमनयत् व्रज–मुग्ध–चन्द्रम् ॥ १ ॥

राधास्ति यत्र नव-सिद्धि-सुधास्ति तत्र
नागाधिलोकविबुधा मदनो रतिश्च ।
सर्वावतार-महिषी सुखमस्ति तत्र
यस्याः पदं क्षणमहो न जहाति कृष्णः ॥ २ ॥

नाद्यापि को वदति नैव पुराणशास्त्रं
राधा यथान्यमहिषी गृहकर्म-मुग्धा ।
कृष्णाधिकाथ सदृशी प्रणयार्धदेहा
किंवा रसामृतमयी त्रिजगद् ब्रवीति ॥ ३ ॥

राधा प्रयाति विपिनं विपिनं प्रयाति
राधा निकुञ्जसदने स च तत्र नित्यम् ।
राधासुखे सुखमुपेत्य दुःखे च दुःखी
कृष्णः कदापि खलु तिष्ठति न स्वतंत्रः ॥ ४ ॥

यत्रास्ति निर्गुणमयी कुपितापि राधा
तत्रास्ति कृष्ण इति निश्चितमेव सर्वैः ।
कृष्णोऽस्ति यत्र न हि तत्र धृतिः कदापि
राधास्ति यत्र तनु-नेत्र-मनांसि तस्य ॥ ५ ॥

भक्तिं न कृष्णचरणे न करोमि चार्तिं
राधा-पदाम्बुज-रजःकण-साहसेन ।
तस्या दृगञ्चल-निपात-विशेषवेत्ता
दैवादयं मयि करिष्यति दासबुद्धिम् ॥ ६ ॥

राधा पदाम्बुज-युगं प्रणिधाय मूर्ध्नि
कृष्णं हृदि स्थितमिवानुभवामि नित्यम् ।
अस्या महत्त्वमनुमानय सर्व एव
केयं सुधारसमयी जगदिष्टदात्री ॥ ७ ॥

कृष्णं विना जगदिदं न हि वेत्ति राधा
राधां विना जगदिदं न हि वेत्ति कृष्णः ।
एतेन सर्वमनुगच्छति सर्व एवं
कृष्ण-प्रकाश-वसतिः खलु राधिकैव ॥ ८ ॥

राधाष्टकं पठति यः प्रयतः प्रभाते
प्रेमालयं नव-नवामृत-पूर्णभाण्डम् ।
धन्यः स एव चतुरः सुखभाजनं स्यात्
कुत्रापि तस्य न भयं क्व च नास्ति दुःखम् ॥ ९ ॥

इति श्रीमन्नरहरिसरकारठक्कुरविरचितं
श्रीराधिकाष्टकं (४) संपूर्णम् ।

## श्रीराधिकाष्टकम् (५) ।

हे राधे वृषभानुभूपतनये हे पूर्णचन्द्रानने
हे कान्ते कमनीयकोकिलरवे वृन्दावनाधीश्वरि ।
हे मत्प्राणपरायणे च रसिके हे सर्वयूथेश्वरि
मत्स्वान्तोच्चवरासने विश मुदा मां दीनमानन्दय ॥ ॥

हे श्यामे कलधौतकान्तिरुचिरे हे कीर्तिदेवीसुते
हे गान्धर्वकलानिधेऽतिसुभगे हे सिन्धुकन्यार्चिते ।
हे कृष्णाननपङ्कजभ्रमरिके दामोदरप्रेयसि
मत्स्वान्तोच्चवरासने विश मुदा मां दीनमानन्दय ॥ २ ॥

हे गौरांगकिशोरिके सुनयने कृष्णप्रिये राधिके
हे वामाक्षि मनोजमानदलने संकेतसंकेतिके ।
हे गोवर्धननाथचर्चितपदे हे गोपचूडामणे
मत्स्वान्तोच्चवरासने विश मुदा मां दीनमानन्दय ॥ ३ ॥

हे वृन्दावननागरी गुणयुते काश्मीरमुद्रांकिते
रक्तालक्तकचर्चितांघ्रिकमले हे चारुबिंबाधरे ।
मुक्तादामविभूषितांगलतिके हे नीलशाटीवृते
मत्स्वान्तोच्चवरासने विश मुदा मां दीनमानन्दय ॥ ४ ॥

हे चन्द्रावलिसेविते सुललिते भद्रारमावन्दिते
पद्माचंपकमालिकानुतपदे हे तुंगभद्राप्रिये ।
हे तन्वंगि मृगाक्षि चारुनयने हे रत्नमंजीकले
मत्स्वान्तोच्चवरासने विश मुदा मां दीनमानन्दय ॥ ५ ॥

रक्तांभोजचकोरमीननयने हे स्वर्णकुंभस्तनि
फुल्लांभोजकरे विलासिनि रमे इन्द्राणिसंराधिते ।
हे वृन्दावनकुंजकेलिचतुरे हे मानलीलाकरे
मत्स्वान्तोच्चवरासने विश मुदा मां दीनमानन्दय ॥ ६ ॥

हे कांच्यादिविभूषितोरुरुचिरे हे मन्दहास्यानने
गोलोकाधिपकामकेलिरसिके हे गोकुलेशप्रिये ।
कालिन्दीतटकुंजवासनिरते हे शुद्धभावप्रिये
मत्स्वान्तोच्चवरासने विश मुदा मां दीनमानन्दय ॥ ७ ॥

मुक्ताराधितपादपद्मयुगले हे पार्वतीशेश्वरि
श्रीमन्नन्दकुमारमारजनिके नीलालकावृन्मुखे ।
राकापूर्णनवेन्दुसुन्दरमुखे रामानुजानन्दिनि
आगत्य त्वरितं त्वमत्र विपिने मां दीनमानन्दय ॥ ८ ॥

इति श्रीराधिकाष्टकं (५) संपूर्णम् ।

# श्रीराधिकाष्टकम् (६) ।

निकुंजे श्रीराधा सघननगपुंजे कुसुमिते
कदंबानांवृन्दैर्मधुपसुखकन्दैः सुषमिते ।
सदा श्रीकृष्णेन्दुप्रणयरससुस्वादनपरा
कृपाकर्त्रीधात्री सुखयतु मुदा मामनुदिनम् ॥ १ ॥

कदाचिद्गोविन्दः स्वजनजनशन्दो हि सुतरां
प्रिये वृन्दारण्येऽगमदखिलमित्रैः सह मुदे ।
तदा तन्माधुर्यामृतमविरतं या सुखमपात्
कृपाकर्त्रीधात्री सुखयतु मुदा मामनुदिनम् ॥ २ ॥

जगाम श्रीराधा सहनिजवयस्याभिरुषसि
प्रभातस्नानाय क्षणदयमुनायाश्च पुलिने ।
तदा दृष्ट्वा प्रेष्ठं मदनमुदिता या च चकिता
कृपाकर्त्रीधात्री सुखयतु मुदा मामनुदिनम् ॥ ३ ॥

कदाचित् श्रीकृष्णो मदनमदमत्तो मतिमतीं
विहायान्यागारे गमनसुखपूर्णो वसुमतीम् ।
तदा मानं धृत्वा प्रियमपि च तं बोधितवती
कृपाकर्त्रीधात्री सुखयतु मुदा मामनुदिनम् ॥ ४ ॥

शुभे गोपीसंघे मणिरचितपीठाभिलषिते
स्थिता मान्या ताभिः कथितपरिहासैश्चसुखयन् ।
मनस्तासां नित्यं वचनमधुरा सा विधुमुखी
कृपाकर्त्रीधात्री सुखयतु मुदा मामनुदिनम् ॥ ५ ॥

वरारोहाभाले विलसति सुकौमुद्यनुपमा
मुखैन्दौ तांबूलं कनकरचितं कुण्डलयुगम् ।

धृता नीलीशाटी मुदितमनसांगेषु च यया
　कृपाकर्त्रीधात्री सुखयतु मुदा मामनुदिनम् ॥ ६ ॥

व्रजस्थाहार्यस्योपरि　निजजनावासलषिते
　कृतावासे रम्यां विलसितवपुर्यः शयितवान् ।
यया साकं साच प्रमुदितमुखी सत्कुलवती
　कृपाकर्त्रीधात्री सुखयतु मुदा मामनुदिनम् ॥ ७ ॥

यदा स्नेहेनासौ रमणमुखमालंबितवती
　तदा प्राणेशान्तः प्रकटपरिहासे सुखवती ।
प्रभोः श्रीकृष्णस्योरसि कृतकराब्जातिमुदिता
　कृपाकर्त्रीधात्री सुखयतु मुदा मामनुदिनम् ॥ ८ ॥

नरो नित्यं भक्त्या नियमितमतिः स्वष्टकमिदं
　सुकालिन्दीप्रेयः कृतमतिशुभं वांछितफलम् ।
पठेद्यस्तस्य　श्रीव्रजपवृषभानुप्रियसुता
　सदा राधा बाधां हरतु हरिभावासितधवा ॥ ९ ॥

इति श्रीयमुनावल्लभशरणगोस्वामिविरचितं
श्रीराधिकाष्टकं (६) संपूर्णम् ।

# श्रीराधिकाष्टकम् (७) ।

स्वत्प्रेम–नाम–गुण–रूप–सुधा–पयोधेः
　सच्छीकराग्रिपरिहीन–सुखान्तरस्य　।
एकां स्वकर्णपदवीं नय वासनां मे
　दासी भवानि वृषभानुकुमारिके ते ॥ १ ॥

कन्दर्पकोटिजयि-पादनखाञ्चलस्य
कृष्णस्य यौवतजनस्पृहणीय-मूर्तेः ।
जेत्रीं निशम्य भवतीं नयनाञ्चलेन
दासी भवानि वृषभानुकुमारिके ते ॥ २ ॥

शास्त्रं विचार्य विदुषां च मतं विलोक्य
त्वत्प्रेमसेवनमहो पुरुषार्थरत्नम् ।
जानन्मुदा मदनमोहनमुग्धरूपे
दासी भवानि वृषभानुकुमारिके ते ॥ ३ ॥

सर्वेश्वरस्य रसिकेन्द्रशिरोमणेस्त्वं
वक्षोऽधिवाससुभगा रसिकाग्रगण्या ।
तद्वां समीक्षितुमनाः रसकेलिजातं
दासी भवानि वृषभानुकुमारिके ते ॥ ४ ॥

हर्षावने निधुवने पुरुषायितायाः
स्वाधःकृताखिलविमोहन-कृष्णमूर्तेः ।
त्वच्छ्रोणि-दोलनसुखं नयनाय दातुं
दासी भवानि वृषभानुकुमारिके ते ॥ ५ ॥

कन्दर्पमल्लसमरेऽति पराक्रमेण
जित्वाजितं भुजभुजंगमपाशबद्धम् ।
श्रान्तां निमीलितदृशं किल सेवितुं त्वां
दासी भवानि वृषभानुकुमारिके ते ॥ ६ ॥

त्वद्दन्तदंश-कमनीय-सुचारुगण्डं
त्वच्छ्रीनखक्षत-विभूषित-मोहनांगम् ।
त्वत्तांबुलारुणदृशं हरिमेव लब्धुं
दासी भवानि वृषभानुकुमारिके ते ॥ ७ ॥

चन्द्रांशुधौत-लतिकासदन-प्रघाणे
हेमासने स्वविटबाहु-विराजितांसाम् ।
त्वामेव साधु परिचर्य मुदं च लब्धुं
दासी भवानि वृषभानुकुमारिके ते ॥ ८ ॥

इति श्रीराधिकानाथगोस्वामिविरचितं श्रीराधिकाष्टकं (७) संपूर्णम् ।

## श्रीगान्धर्वासंप्रार्थनाष्टकम् ।

वृन्दावने विहरतोरिह केलिकुञ्जे
मत्त-द्विप-प्रवर-कौतुक-विभ्रमेण ।
सन्दर्शयस्व युवयोर्वदनारविन्द-
द्वन्द्वं विधेहि मयि! देवि कृपां प्रसीद ॥ १ ॥

हा देवि! काकुभर-गद्गदयाद्य-वाचा
याचे निपत्य भूवि दण्डवदुद्भटार्तिः ।
अस्य प्रसादमबुधस्य जनस्य कृत्वा
गान्धर्विके! निजगणे गणनां विधेहि ॥ २ ॥

श्यामे! रमारमण-सुन्दरता-वरिष्ठ-
सौन्दर्य-मोहित-समस्त-जगज्जनस्य ।
श्यामस्य वामभुज-बद्धतनुं कदाहं
त्वामिन्दिरा-विरल-रूपभरां भजामि? ३ ॥

त्वां प्रच्छदेन मुदिरच्छविना पिधाय
मञ्जीर-मुक्त-चरणां च विधाय देवि!
कुञ्जे व्रजेन्द्र-तनयेन विराजमाने
नक्तं कदा प्रमुदितामभिसारयिष्ये? ४ ॥

कुञ्जे प्रसून-कुल-कल्पित-केलि-तल्पे
संविष्टयोर्मधुर-नर्म-विलास-भाजोः ।
लोक-त्रयाभरणयोश्चरणाम्बुजानि
संवाहयिष्यति कदा युवयोर्जनोऽयम् ? ५ ॥

त्वत्कुण्ड-रोधसि विलास-परिश्रमेण
स्वेदाम्बु-चुम्बि-वदनाम्बुरुह-श्रियौ वाम् ।
वृन्दावनेश्वरि ! कदा तरुमूलभाजौ
संवीजयामि चमरीचय-चामरेण ? ६ ॥

लीनां निकुञ्जकुहरे भवतीं मुकुन्दे
चित्रैव सूचितवतीं रुचिराक्षि ! नाहम् ।
भुग्नां भ्रुवं न रचयेति मृषारुषां त्वा-
मग्रे व्रजेन्द्र-तनयस्य कदा नु नेष्ये ? ७ ॥

वाग्युद्ध-केलि-कुतुके व्रजराज-सूनुं
जित्वोन्मदामधिकदर्प-विकासि-जल्पाम् ।
फुल्लाभिरालिभिरनल्पमुदीर्यमाण-
स्तोत्रां कदा नु भवतीमवलोकयिष्ये ? ८ ॥

यः कोऽपि सुष्ठु वृषभानु-कुमारिकायाः
संप्रार्थनाष्टकमिदं पठति प्रपन्नः ।
सा प्रेयसा सह समेत्य धृतप्रमोदा
तत्र प्रसाद-लहरीमुररीकरोति ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीगान्धर्वासंप्रार्थनाष्टकं संपूर्णम् ।

# श्रीनवाष्टकम् ।

गौरीं गोष्ठवनेश्वरीं गिरिधर-प्राणाधिक-प्रेयसीं
स्वीय-प्राण-परार्ध-पुष्प-पटली-निर्मञ्छ्य-तत्पद्धतिम् ।
प्रेम्णा प्राणवयस्यया ललितया संलालितां नर्मभिः
सिक्तां सुष्ठु विशाखया भज मनो ! राधामगाधां रसैः ॥१॥

स्वीय-प्रेष्ठ-सरोवरान्तिक-वलत्-कुञ्जान्तरे सौरभोत्-
फुल्लत्-पुष्प-मरन्द-लुब्ध-मधुप-श्रेणी-ध्वनि-भ्राजिते ।
माद्यन्मन्मथ-राज्य-कार्यमसकृत् सम्भालयन्तीं स्मरा-
मात्य-श्रीहरिणा समं भज मनो ! राधामगाधां रसैः ॥२॥

कृष्णापाङ्ग-तरङ्ग-तुङ्गिततरानङ्गासु-रङ्गां गिरां
भंग्या लङ्गिम-सङ्गरे विदधतीं भङ्गं नु तद्रङ्गिणः ।
फुल्लत्-स्मेर-सखी-निकाय-निहित-स्वाशीः-सुधास्वादन-
लब्धोन्माद-धुरोद्धुरां भज मनो ! राधामगाधां रसैः ॥३॥

जित्वा पाशककेलि-सङ्गरतरे निर्वाद-बिम्बाधरां
स्मित्वा द्विः पणितं धयत्यघहरे सानन्द-गर्वोद्धुरे ।
ईषच्छोण-दृगन्त-कोणमुदयद्रोमाञ्च-कम्प-स्मितं
निघ्नन्तीं कमलेन तं भज मनो ! राधामगाधां रसैः ॥४॥

अंसे न्यस्य करं परं बकरिपोर्बाढं सुसख्योन्मदां
पश्यन्तीं नव-कानन-श्रियमिमामुद्यद्वसन्तोद्भवाम् ।
प्रीत्या तत्र विशाखया किशलयं नव्यं वितीर्णं प्रिय-
श्रोत्रे द्राग्दधतीं मुदा भज मनो ! राधामगाधां रसैः ॥५॥

मिथ्या-स्वापमनल्प-पुष्प-शयने गोवर्धनाद्रेर्गुहा-
मध्ये प्राग्दधतो हरेर्मुरलिकां हृत्वा हरन्तीं स्रजम् ।

स्मित्वा तेन गृहीत-कण्ठ-निकटां भीत्यापसारोत्सुकां
हस्ताभ्यां दमितस्तनीं भज मनो ! राधामगाधां रसैः ॥६॥

तूर्णं गाः पुरतो विधाय सखिभिः पूर्णं विशन्तं व्रजे
घूर्णद्यौवत-कांक्षिताक्षि-नटनैः पश्यन्तमस्या मुखम् ।
श्यामं श्याम-दृगन्त-विभ्रम-भरैरान्दोलयन्तीतरां
पद्मा-म्लानिकरोदयां भज मनो ! राधामगाधां रसैः ॥७॥

प्रोद्यत्-कान्तिभरेण वल्लव-वधूतारा: परार्धात् पराः
कुर्वाणां मलिनाः सदोज्ज्वल-रसे रासे लसन्तीरपि ।
गोष्ठारण्य-वरेण्य--धन्य--गगने गत्यानुराधाश्रितां
गोविन्देन्दु-विराजितां भज मनो ! राधामगाधां रसैः ॥८॥

प्रीत्या सुष्ठु नवाष्टकं पटुमतिर्भूमौ निपत्य स्फुटं
काक्वा गद्गद-निस्वनेन नियतं पूर्णं पठेद्यः कृती ।
घूर्णन्मत्त-मुकुन्द-भृङ्ग-विलसद्राधा-सुधावल्लवीं
सेवोद्रेकरसेन गोष्ठविपिने प्रेम्णा स तां सिञ्चति ॥९॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीनवाष्टकं संपूर्णम् ।

## श्रीराधिकायाः प्रेमपूराभिधस्तोत्रम् ।

मधु--मधुर--निशायां ज्योतिरुद्भासितायां
सित--कुसुम--सुवासाः क्लृप्त--कर्पूरभूषा ।
सुबल--सखमुपेता दूतिका--न्यस्त--हस्ता
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥ १ ॥

स्मर--गृहमविशन्ती वाम्यतो धाम गन्तुं
सरणिमनुसरन्ती तेन संरुद्धच तूर्णम् ।
बल-सवलित-काक्वा लम्भितान्तःस्मिताक्षी
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥ २ ॥

मुदिर--रुचिर--वक्षस्युन्नते माधवस्य
स्थिरचर--वर--विद्युद्वल्लिवन्मल्लि--तल्पे ।
ललित--कनक--यूथी--मालिकावच्च भान्ती
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥ ३ ॥

स्मर--विलसित--तल्पे जल्पलीलामनल्पां
क्रमकृति--परिहीनां बिभ्रती तेन सार्धम् ।
मिथ इव परिरम्भारंभ--वृत्त्येक--वर्ष्मा
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥ ४ ॥

प्रमद--मदन--युद्ध--श्रान्तितः कान्त--कृष्ण-
प्रचुर--सुखद--वक्षः--स्फार--तल्पे स्वपन्ती ।
रस-मुदित-विशाखा-जीविताब्धौ समृद्धा
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥ ५ ॥

अपि बत सुरतान्ते प्रौढि-सौभाग्य-दृप्यत्-
प्रणयधृत--सुसख्योन्माद--मत्तोरु--गर्वैः ।
दर--गदित--मुकुन्दाकल्पिताकल्प--तल्पा
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥ ६ ॥

स्मर--दयित--निकुञ्ज--प्राङ्गणे व्यावहास्यां
व्रज--नव--युवराजं वक्रिमाडम्बरेण ।
सदसि परिभवन्ती संस्तुताली--कुलेन
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥ ७ ॥

क्वचन च दर--दोषाद्दैवतः कृष्णजातात्
सपदि विहितमाना मौनिनी तत्र तेन ।
प्रकटित--पटु--चाटु--प्रार्थ्यमान--प्रसादा
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥ ८ ॥

पितुरिह वृषभानोर्भाग्यभङ्गी बकारेः
प्रणय--विपिन--भृङ्गी सङ्गिनी तस्य देवी ।
निजगण--कुमुदालेः कौमुदी हा कृपाब्धे !
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥ ९ ॥

निरवधि--गुणसिन्धो ! भद्रसेनादि--बन्धो !
निरुपम--गुणवृन्द--प्रेयसीवृन्द--मौले !
अति--कदन--समुद्रे मज्जतो हा कृपाद्रे !
क्षणमपि मम राधे ! नेत्रमानन्दय त्वम् ॥१०॥

नटयति रुचि--नान्दीमुन्नयन् सूत्रधार-
प्रवर इव रसज्ञा--नर्तकीं रङ्गरूपे ।
रसवति दशकेऽस्मिन् प्रेमपूराभिधे यः
स सपदि लभते तत् द्वन्द्वरत्न--प्रसादम् ॥११॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित--स्तवावल्यां
श्रीराधिकायाः प्रेमपूराभिधस्तोत्रं संपूर्णम् ।

# श्रीराधिकाध्यानामृतस्तोत्रम् ।

तडिच्चम्पक--स्वर्ण--काश्मीर--भासः
स्वकान्त्या भृशं दण्डयित्र्या विलासः ।
स्वरूपस्य तस्यास्तु कस्यास्तु वर्ण्यः
सुबोध--द्रवो नामवर्णोऽपि कर्ण्यः ॥ १ ॥

प्रफुल्लालिपुष्प--प्रभा--द्योतितानां
　लसच्चन्द्रिका–प्रोत–मेघोपमानाम्　　।
कचानां　सचातुर्य–बन्धेयमेणी–
　दृशः　सच्चमर्यग्रिमा　भाति　वेणी ॥ २ ॥

महानर्घ--चूडामणिः　कामलेखा–
　प्लुता　राजते　चारु–सीमन्तरेखा ।
उडुद्योति–मुक्तैकपंक्तिं　वहन्ती
　किमास्येन्दु–सौधैकधारोच्चलन्ती　　॥ ३ ॥

नवेन्दूपमे　पत्रपाश्या–प्रभाले
　सुलीलालकालीवृते　चारुभाले ।
मदेनान्तरा　चित्रितं　चित्रकं　तत्
　विभात्यच्युतातृप्त–नेत्रैकसम्पत्　　॥ ४ ॥

अतिश्यामला विज्य–कन्दर्प–चाप–
　प्रभाजिष्णुतां–भ्रूद्वयी　कुञ्चिताप ।
मुखाम्भोज–माध्वीक–पानादभीष्टा--
　दचेष्टालि--पंक्तिः　किमेषा　निविष्टा ॥ ५ ॥

सफर्याविव　प्रेष्ठ--लावण्य--वन्ये--
　प्सिते　राजतस्ते　दृशौ हन्त !　धन्ये ।
लसत्कज्ज्वलाक्ते　तयोः　श्यामपक्ष्म
　क्वचिद्विन्दते　कान्त--ताम्बूल--लक्ष्म ॥ ६ ॥

तडित्--कन्दली　मूर्ध्नि　नक्षत्रयुक्ता
　स्थिराधः　सुधा--बुद्बुद--द्वन्द्वसक्ता ।
यदि　स्यात्　सरोजान्तरे　ताञ्च　भासा
　मृगाक्ष्यास्तिरस्कुर्वती　भाति　नासा ॥ ७ ॥

कपोलाक्षि--बिम्बाधर--श्री--विषक्तं
भवेन्मौक्तिकं पीतनीलातिरक्तम् ।
स्मितोद्यत् पुटोदीर्ण--माधुर्यवृष्टि--
र्लसत्यच्युत--स्वान्त--तर्षैकसृष्टिः ॥ ८ ॥

लसत्कुण्डले कुण्डलीभूय मन्ये
स्थिते कामपाशायुधे हन्त ! धन्ये ।
श्रुती रत्नचक्रीशलाकाञ्चिताग्रे
दृशौ कर्षतः श्रीहरेर्ये समग्रे ॥ ९ ॥

अतिस्वच्छमन्तःस्थ--ताम्बूलराग--
च्छटोद्गारि--शोभाम्बुधौ किं ललाग ।
कपोलद्वयं लोल--ताटङ्क--रत्न--
द्युमच्चुम्बितुं प्रेयसो यत्र यत्नः ॥१०॥

स्फुटद्बन्धुजीव--प्रभाहारि--दन्त--
च्छदद्वन्द्वमाभाति तस्या यदन्तः ।
स्मितज्योत्स्नया क्षालितं या सतृष्णं
चकोरीकरोत्यन्वहं हन्त ! कृष्णम् ॥११॥

न सा विन्दते पाकिमारुण्यभाजि--
च्छविर्यत्तुलां दाडिमीबीजराजिः ।
कथं वर्ण्यतां यात्वियं दन्तपंक्ति--
र्मुकुन्दाधरे पौरुषं या व्यनक्ति ॥१२॥

मुखाम्भोज--माधुर्यधारा वहन्ती
यदन्तः कियन्निम्नतां प्रापयन्ती ।
किमेषापि कस्तूरिका--बिन्दुभृत्तं
हरिं किं दधानं विभात्यास्यवृत्तम् ॥१३॥

स कण्ठस्तडित्-कम्बु--सौभाग्यहारी
त्रिरेखः पिक-स्तव्य-सौस्वर्यधारी ।
स्रजं मालिकां मालिकां मौक्तिकानां
दधत्येव यः प्रेयसा गुम्फितानाम् ॥ १४ ॥

उरोजद्वयं तुङ्गता-पीनताभ्यां
समं सख्ययुक् कृष्णपाण्यम्बुजाभ्याम् ।
नखेन्दुर्यदोदेतुमिच्छां विधत्ते
तदा कञ्चुकः कालिका नापि धत्ते ॥१५॥

म्रदिम्ना शिरीषस्य सौभाग्यसारं
क्षिपन्त्या वहन्त्या भुजाभोगभारम् ।
तुलाशून्यसौन्दर्यसीमां दधत्या
निजप्रेयसेऽजस्रसौख्यं ददत्याः ॥१६॥

श्रितायाः स्वकान्त--स्वतां कम्रगात्र्याः
श्रियाः श्रीविलासान् भृशं खर्वयन्त्याः ।
गतांसद्वयी--सौभगैकान्तकान्तं
यदा पाणिनोत्कामयेत् सालकान्तम् ॥१७॥

तडिद्धामभृत्--कङ्कणानद्धसीमा
घनद्योत--चूडावली सास्रसीमा ।
चकास्ति प्रकोष्ठद्वये या स्वनन्ती
स्मराजौ सुखाब्धौ सखीः प्लावयन्ती ॥१८॥

तदा भाति रक्तोत्पलद्वन्द्व--शोचि--
स्तिरस्कारि--पाणिद्वयं यत्र रोचिः ।
शुभाङ्कावलेः सौभगं यद्व्यनक्ति
प्रियान्तर्हृदि स्थापने यस्य शक्तिः ॥१९॥

नखज्योतिषा भान्ति ताः पाणिशाखाः
करोत्यूर्मिकालंकृता या विशाखा ।
समासज्य कृष्णांगुलीभिर्विलास--
स्तदासां यदा राजते हन्त ! रासः ॥२०॥

जनित्वैव नाभी सरस्युद्गता सा
मृणालीव रोमावलिर्भाति भासा ।
स्तनच्छद्मनैवाम्बुजाते यदग्रे
मुखेन्दु--प्रभा--मुद्रिते ते समग्रे ॥२१॥

कृशं किन्तु शोकेन मुष्टिप्रमेयं
न लेभे मणिभूषणं यत् पिधेयम् ।
निबद्धं बलीभिश्च मध्यं तथापि
स्फुटं तेन सुस्तव्य--सौन्दर्यमापि ॥२२॥

क्वणत्--किङ्किणी--मण्डितं श्रोणिरोधः
परिस्फारि यद्वर्णने क्वास्ति बोधः ।
कियान् वा कवेर्हन्त ! यत्रैव नित्यं
मुकुन्दस्य दृक्खञ्जनोऽवाप नृत्यम् ॥२३॥

प्रियानङ्गकेलिभरैकान्तवाटी--
पटीव स्फुरत्यञ्चिता पट्टशाटी ।
विचित्रान्तरीयोपरि श्रीभरेण
क्षिपन्ती नवेन्दीवराभाम्बरेण ॥२४॥

कदल्याविवानङ्ग--माङ्गल्य--सिद्धौ
समारोपिते श्रीमदूरू समृद्धौ ।
विभातः परं वृत्तता--पीनताभ्यां
विलासैः हरेश्चेतनाहारि याभ्याम् ॥२५॥

विराजत्यहो ! जानुयुग्मं पटान्तः
समाकर्षति द्रागथाप्यच्युतान्तः ।
यदालक्ष्यते तत्र लावण्यसम्पत्
सुवृत्तं लसत्कानकं सम्पुटं तत् ॥२६॥

तनुत्वं क्रमान्मूलतश्चारुजंघे
प्रयातः परिप्राप्त-सौभाग्यसंघे ।
पदाम्भोजयोर्नीलता धारयन्त्यौ
स्वभामन्तरीयान्तरे गोपयन्त्यौ ॥२७॥

जयत्यंघ्रि-पंकेरुह द्वन्द्वमिष्टं
दलाग्रे नखेन्दु--व्रजेनापि हृष्टम् ।
क्वणन्नूपुरं हंसकाराव--भक्तं
हरिं रञ्जयत्येव लाक्षारसाक्तम् ॥२८॥

दराम्भोज-ताटङ्क-वल्ली-रथाद्यै-
र्महालक्षणैर्भव्यवृन्दाभिवाद्यैः ।
युतं यत्तलं मार्दवारुण्यशालि
स्मृतं यद्भवेदच्युताभीष्टपालि ॥२९॥

प्रिये ! श्यामलो लेढु भृङ्गो नलिन्या
मरन्दं परं दन्दशीति क्षुदन्या ।
यदेतं वतेत्यच्युतोक्त्याञ्चलान्त-
मुखाब्जे सितेन्दुं दधे सालकान्तः ॥३०॥

तमालम्ब्य लब्धौजसो माधवस्य
स्फुटं पाणि-चापल्यमल्पं निरस्य ।
तया स्वाधरः साधु कर्पूरलिप्तः
कृतो नेति नेत्यक्षरोद्गार-दीप्तः ॥३१॥

स जागर्ति तस्याः परीवार-चेत-
स्तटेऽनुक्षणं रम्य-लीला-समेतः ।
अथाप्यष्टयामिक्यमुष्याः सपर्या
यथाकालमाचर्यते तेन वर्या ॥३२॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचित-स्तवामृतलहर्यां
श्रीराधिकाध्यानामृतस्तोत्रं संपूर्णम् ।

# श्रीराधिकाया आनन्दचन्द्रिकाख्य-दशनामस्तोत्रम् ।

राधा दामोदरप्रेष्ठा राधिका वार्षभानवी ।
समस्त-बल्लवी-वृन्द-धम्मिल्लोत्तंस-मल्लिका ॥ १ ॥

कृष्ण-प्रियावली-मुख्या गान्धर्वा ललितासखी ।
विशाखा-सख्य-सुखिनी हरि-हृद्भृङ्ग-मञ्जरी ॥ २ ॥

इमां वृन्दावनेश्वर्या दशनाम-मनोरमाम् ।
आनन्दचन्द्रिकां नाम यो रहस्यां स्तुतिं पठेत् ॥ ३ ॥

स क्लेशरहितो भूत्वा भूरि-सौभाग्य-भूषितः ।
त्वरितं करुणापात्रं राधामाधवयोर्भवेत् ॥ ४ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीराधिकाया आनन्दचन्द्रिकाख्य-दशनामस्तोत्रं संपूर्णम् ।

# श्रीराधिकाष्टोत्तरशतनामस्तोत्रम् (१) ।

मानसं मानसंत्यागादुत्कण्ठार्तं निरुन्धतीम् ।
राधां संविद्य विद्याढ्या तुङ्गविद्येदमब्रवीत् ॥ १ ॥

विमुञ्च बन्धुरे मानं निर्बन्धं शृणु मद्वचः ।
पुरा कन्दर्पसुन्दर्यै यान्युत्कण्ठितचेतसे ॥ २ ॥

भगवत्योपदिष्टानि तव सख्योपलब्धये ।
इङ्गिताभिज्ञया तानि सिन्दूरेणाद्य वृन्दया ॥ ३ ॥

विलिख्य सखि दत्तानि स जीवितसुहृत्तमः ।
विरहार्तस्तवेमानि जपन्नामानि शाम्यति ॥ ४ ॥

राधा कृष्णवनाधीशा मुकुन्दमधुमाधवी ।
गोविन्दप्रेयसीवृन्दमुख्या वृन्दावनेश्वरी ॥ ५ ॥

ब्रह्माण्डमण्डलोत्तंसकीर्तिः कार्तिकदेवता ।
दामोदरप्रियसखी राधिका वार्षभानवी ॥ ६ ॥

भानुभक्तिभराभिज्ञा वृषभानुकुमारिका ।
मुखराप्राणदौहित्री कीर्तिदाकीर्तिदायिनी ॥ ७ ॥

कृष्णप्रेमाब्धिमकरी वत्सलाच्युतमातृका ।
सखीमण्डलजीवातुर्ललिताजीविताधिका ॥ ८ ॥

विशाखाप्राणसर्वस्वं कारुण्यामृतमेदुरा ।
पौर्णमासीपृथुप्रेमपात्री सुबलनन्दिता ॥ ९ ॥

कुञ्जाधिराजमहिषी वृन्दारण्यविहारिणी ।
विशाखासख्यविख्याता ललिताप्रेमलालिता ॥१०॥

सदाकिशोरिका गोष्ठयुवराजविलासिनी ।
गोविन्दप्रेमशिक्षार्थनटीकृतनिजांशका ॥११॥

प्रबोधनीनिशानृत्यमाहात्म्यभरदर्शिनी ।
चन्द्रकान्तिचरी सर्वगन्धर्वकुलपावनी ॥१२॥

स्वजन्मभूषितोत्तुङ्गवृषभानुकुलस्थितिः ।
लास्यविद्याव्रतस्नाता रासक्रीडादिकारणम् ॥१३॥

रासोत्सवपुरोगण्या कृष्णनीतरहस्थला ।
गोविन्दबद्धकबरी कृष्णोत्तंसितकुन्तला ॥१४॥

व्यक्तगोष्ठारविन्दाक्षीवृन्दोत्कर्षातिहर्षिणी ।
अन्नतर्पितदुर्वासा गान्धर्वा श्रुतिविश्रुता ॥१५॥

गान्धर्विका स्वगान्धर्वविस्मापितबलाच्युता ।
शंखचूडारिदयिता गोपीचूडाग्रमालिका ॥१६॥

चारुगोरोचनागौरी गारुत्मतनिभाम्बरा ।
विचित्रपट्टचमरीचारुवेणीशिखारुचिः ॥१७॥

पक्षेन्दुजैत्रवक्त्रश्रीनिरुद्धसुरमर्दना ।
चकोरिकाचमत्कारिहारिहारिविलोचना ॥१८॥

कालीयदमनोत्कम्पिभंगुरभ्रूभुजङ्गमा ।
नासिकाशिखरालम्बिलवलीस्थूलमौक्तिका ॥१९॥

बन्धुराधरबन्धूकविकृष्टमधुसूदना ।
दन्तनिर्धूतशिखरा शिखरीन्द्रधरप्रिया ॥२०॥

कपोलमण्डलान्दोलिमणिकुण्डलमण्डिता ।
पीतांशुकशुकाकर्षिनिस्तलस्तनदाडिमा ॥२१॥

मणिकिङ्किण्यलङ्कारझङ्कारिश्रोणिमण्डला ।
स्थलारविन्दविञ्जोलीनिर्मञ्छितपदद्युतिः ॥२२॥

अरिष्टवधनर्मार्थनिर्मापितसरोवरा ।
गन्धोन्मादितगोविन्दा माधवद्वन्द्वताङ्किता ॥ २३॥

कालिन्दीकूलकुञ्जश्रीभाण्डीरतटमण्डना ।
धृतनन्दीश्वरस्थेमा गोवर्धनदरीप्रिया ॥२४॥

वंशीबडिशिकाविद्धरसोत्तर्षमनोझषा ।
वंशिकाध्वनिविश्रंसिनीवीबन्धग्रहातुरा ॥२५॥

मुकुन्दनेत्रशफरीविहारामृतदीर्घिका ।
निजकुण्डकुडुङ्गान्तस्तुङ्गानङ्गरसोन्मदा ॥२६॥

कृष्णभ्रूचण्डकोदण्डोड्डीनधैर्यविहङ्गमा ।
अनुरागसुधासिन्धुहिन्दोलान्दोलिताच्युता ॥२७॥

व्रजेन्द्रनन्दनास्येन्दुतुङ्गितानङ्गसागरा ।
अनङ्गसङ्गरोत्तृष्णकृष्णलुञ्चितकञ्चुका ॥२८॥

लीलापद्महतोद्दामनर्मलम्पटकेशवा ।
हरिवक्षोहरिग्रावहरितालीयरेखिका ॥२९॥

माधवोत्सङ्गपर्यङ्का कृष्णबाहूपधानिका ।
रतिकेलिविशेषोहसखीस्मितविलज्जिता ॥३०॥

आलीपुरोरहःकेलिजल्पोत्कहरिवन्दिनी ।
वैजयन्तीकलाभिज्ञा वनस्रक्शिल्पकल्पिनी ॥३१॥

धातुचित्रातिवैचित्रीविसृष्टिपरमेष्ठिनी ।
वैदग्धीप्रथमाचार्या चारुचातुर्यचित्रिता ॥३२॥

असाधारणसौभाग्यभाग्यामृततरङ्गिणी ।
मौग्ध्यप्रगल्भतारम्या धीराधीराङ्कभूषिता ॥३३॥

श्यामलप्रच्छदपटी मूकनूपुरधारिणी ।
निकुञ्जधामसंस्कारमाधवाध्वेक्षणक्रिया ॥३४॥

प्रादुर्भूतघनोत्कण्ठा विप्रलम्भविषण्णधीः ।
प्रातरुत्प्रासितोपेन्द्रा चन्द्रावलिकटाक्षिणी ॥३५॥

अनाकर्णितकंसारिकाकुवादा मनस्विनी ।
चाटुकारहरित्यागजातानुशयकातरा ॥३६॥

धृतकृष्णेक्षणौत्सुक्या ललिताभीतिमानिनी ।
विप्रयोगव्यथाहारिहरिसंदेशनन्दिता ॥३७॥

मदालजल्पिताधीनपुण्डरीकाक्षमण्डिता ।
भ्रूलीलामोहितोपेन्द्रहस्ताप्रहृतवंशिका ॥३८॥

अतुलाच्युतमाधुर्यस्वादनाद्वैतभाग्यभूः ।
नियुद्धश्रान्तिनिद्राणहरिहारापहारिणी ॥३९॥

द्यूतनिर्जितवंशार्थिकंसारिपरिहासिनी ।
निजप्राणार्बुदप्रेष्ठकृष्णपादनखाञ्चला ॥४०॥

इति राधा सखीवाचमाचम्य पुलकाञ्चिता ।
छद्मना पद्मनाभस्य लतासद्मान्तिकं गता ॥४१॥

यः सेवते जनो राधानाम्नामष्टोत्तरं शतम् ।
नाम्ना प्रेमसुधासत्त्रं लिह्यात्प्रेमसुधामसौ ॥४२॥

इति श्रीमद्रूपगोस्वामिविरचित–स्तवमालायां
श्रीराधिकाष्टोत्तरशतनामस्तोत्रं (१)
( श्रीप्रेमसुधासत्त्राख्यं श्रीवृन्दावनेश्वरीनामाष्टोत्तरशतंस्तोत्रं ) संपूर्णम् ।